क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति त-
त्सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते[1]॥

भट्टेन्दुराजचरणाब्जकृताधिवासहृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम् ।
यत्किञ्चिदप्यनुरणन्स्फुटयामि काव्यालोकं स्वलोचननियोजनया जनस्य ॥

स्वयमव्युच्छिन्न[2]परमेश्वरनमस्कारसम्पत्तिचरितार्थोऽपि[3] व्याख्यातृ[4]श्रोतॄणामविघ्नेनाभीष्टव्याख्याश्रवणलक्षणफलसम्पत्तये समुचिताशीःप्रकटनद्वारेण[5] परमेश्वरसांमुख्यं करोति वृत्तिकारः **स्वेच्छेति**[6]॥ मधुरिपोर्नखा वो[7] युष्मान् व्याख्यातृश्रोतॄन्[8] त्रायन्ताम्। तेषामेव[9] सम्बोधनयोग्यत्वात्। सम्बोधनसारो हि युष्मदर्थः। त्राणं चाभीष्ट[10]लाभं प्रति [11]साहायकाचरणम्; तच्च तत्प्रतिद्वन्द्विविघ्नापसरणादिना

**क्रमादिति** = यच्च प्रख्या ज्ञानं कवेः **उपाख्या** 'शब्दः सहृदयादुपाख्ये'ति तस्य। कवेर्हि अपूर्वार्थदर्शनं कवित्वम्,

सहृदयस्य चतुरं मधुरं प्रवक्तृत्वं सहृदयत्वम्। अथवा द्वयोरप्येते। प्रथमं प्रख्या, पश्चादुपाख्येति तयोः **प्रसरेण सुभगं** हृद्यमास्वाद्यं यथा भवति तथा प्रकाशयति। तदुक्तम्—

स्वभावश्चायमर्थानां यत्र साक्षादमी तथा।

स्वदन्ते सत्कविगिरां गता गोचरतां यथा। (व्यक्तिविवेकः, 1.44)

इति। अनेनापि स्वग्रहणवचनस्पृष्टस्य सौभाग्यविधानाकुशलो ब्रह्मेति प्रकृततत्त्वस्य प्रकर्ष एवोक्तः। तत्र न केवलं सुभगत्वस्यैव प्रख्योपाख्याप्रसरोऽपेक्षितः। अपि तु प्रथनप्रसारणयोरपीत्यवसेयम्॥

अत्र प्रथमेन वाक्येन यदुक्तं स्वलक्षणेनापूर्वनिर्माणं, द्वितीयेन पूर्वं सतः सरसत्वापादनं, तृतीयेनोभयस्यापि हृद्यतया प्रकाशनमुक्तम्॥

अथ चिकीर्षितं प्रतिजानीते— **भट्टेन्दुराजेति। अभिनवगुप्तपदाभिधोऽहं जनस्य** श्रोतृजनस्य **काव्यालोकं** काव्यालोकनामानं ध्वनिलक्षणग्रन्थं **स्फुटयामि** अभिव्यक्ततया विवृणोमि। **यत्किञ्चिदनुरणन्नपि** स्तोकं वदन्नपि। **स्वलोचननियोजनया** स्वबोधसमर्पणेन नेत्रनियोजनया। यथा प्रकाशं स्फुटयतीत्यपि स्फुरति। **भट्टेन्दुराजस्य** परमगुरोश्**चरणाब्जे कृते। योऽधिवासः** सुरभीकरणं तेन **हृद्यं श्रुतं** यस्य स तथा। "स्वयमव्युच्छिन्नपरमेश्वरेत्यादि—वृत्तिकार" इत्यनेन "स्वेच्छाकेसरी" इति पद्यं न सूत्रमिति दर्शयति। तथा च वक्ष्यति— **आदिमवाक्यमाहेति।**

कथमिव? **मधुरिपोः नखा** इत्यादि। कथं व इत्यनेन व्याख्यातृश्रोतारः परामृश्येरन्नित्यत्र हेतुमाह— **तेषामेवेति।** तेषां व्याख्यातृश्रोतॄणां कथमत्र संबोधनप्रसङ्ग इत्याशङ्क्याह—**सम्बोधनसार** इति। **संबोधनसारः** संबोधनाविनाभूतः। अथ यद्यपि **त्रा**णम**पदो** विनिर्वर्तनं प्रसिद्धं तथापि प्रस्तावौचित्येन

[1]क.ख.ग.(नि) विजयतात्. [2]क.ख.ग.(नि) अविच्छिन्न. [3]क.ग.'अपि' नास्ति. [4]ख. श्रोतॄणामपि अवि०. [5](कौ) द्वारा. [6](कौ) स्वेच्छेत्यादिना. [7]ग.घ.ङ.(नि) 'वः' इति नास्ति. [8](कौ) श्रोतृव्याख्यातॄन्. [9](कौ) अत्र. [10](कौ) फललाभं. [11]क.ख.(नि) साहाय्यकाचरणं.

**भवतीति इयदत्र त्राणं विवक्षितम्।** नित्योद्योगिनश्च भगवतः [1]असंमोहाध्यवसाय[2]-**योगित्वेनोत्साहप्रतीतेर्वीररसो** ध्वन्यते। नखानां प्रहरणत्वे, प्रहरणेन च रक्षणे **कर्तव्ये** नखानामव्यतिरिक्तत्वेन करणत्वात्, सातिशयशक्तिता कर्तृत्वेन सूचिता। ध्वनितश्च **परमेश्वरस्य** व्यतिरिक्तकरणापेक्षाविरहः। मधुरिपोरित्यनेन तस्य सदैव जगत्त्रासापसारणोद्यम उक्तः। कीदृशस्य मधुरिपोः? स्वेच्छया केसरिणः; न तु कर्मपारतन्त्र्येण, नाप्यन्यदीयेच्छया; अपितु विशिष्टदानवहननोचिततथाविधेच्छा-**परिग्रहौचित्यादेव स्वीकृतसिंहरूपस्येत्यर्थः।** कीदृशा नखाः? प्रपन्नानामार्तिं ये छिन्दन्ति। नखानां हि छेदकत्वमुचितम्; आर्तेः पुनश्छेद्यत्वं नखान्प्रत्यसंभावनीयमपि तदीयानां नखानां स्वेच्छानिर्माणौचित्यात्संभाव्यत एवेति यावत्। अथवा त्रिजगत्कण्टको हिरण्य-कशिपुर्विश्वस्य क्लेशकार[3] इति स एव वस्तुतः प्रपन्नानां भगवदेकशरणस्थितीनां जनानामार्तिकारित्वान्मूर्तैवार्तिः; तं विनाशयाद्भिरार्तिरेवोच्छिन्ना भवतीति परमेश्वरस्य तस्यामप्यवस्थायां परमकारुणिकत्वमुक्तम्। किं च ते नखाः किं [4]गुणाः? स्वच्छेन स्वच्छतागुणेन नैर्मल्येन; स्वच्छमृदुप्रभृतयो हि मुख्यतया भाववृत्तय एव; स्वच्छायया च वक्रहृद्यरूपया आकृत्या आयासितः खेदित इन्दुर्यैः। अत्रार्थशक्तिमूलेन ध्वनिना

विवक्षितं त्राणं व्याचष्टे—**त्राणं चेति। नित्योद्योगिन** इति। असंमोहाध्यवसायादेरुत्साहस्संपद्यते। **स प्रकृष्टो** वीररसः। यदुक्तम्—

वीरः प्रतापविनयाध्यवसायसत्त्वामोहाविषादनयविस्मयविक्रमाद्यैः।

उत्साहभूरिति॥ (दशरूपकम्, IV. 73) ध्वन्यते अभिव्यज्यते। **नखानां प्रहरणत्वेनेति। नखाः** प्रहरणानि भवन्ति॥

**यदाह—** अयःकुशीभिः कवयो न शस्त्रिणस्तलाश्च दन्ताश्च नखाश्च सन्ति नः॥ इति।

**प्रहरणेन च रक्षणे कर्तव्ये** इति। प्रहरणं खलु स्वस्य वा अन्यस्य वा रक्षणं कर्तुमुपादीयते। नखाः प्रहरणं भवति। प्रहरणेन च रक्षा कर्तव्या यतः तत इत्यर्थः।

**अव्यतिरिक्तत्वेन** अबाह्यत्वेन आभ्यन्तरत्वेनेति यावत्। द्विविधं हि करणमाभ्यन्तरं बाह्यं च। बाह्यं प्रदीपादि। अन्यच्चक्षुरादि। कर्तृत्वेनेति। नखा इति करणे कर्तृत्वोपचारात्। **ध्वनितश्चेति।** व्यतिरिक्तकरणं बाह्यकरणं खड्गादिकम्। **मधुरिपोरिति।** मधुरिपुशब्दस्तावत् संज्ञिनं धर्मिणमभिदधाति। **व्यनक्ति** च सदातनं जगत्त्रासापसारणोद्यमम्। **विशिष्टेति।** अतिवेलं जगदुपद्रवकारित्वात् सद्योऽतिदारुणं निहन्तव्यत्वविशिष्टम्।

**आर्तेः पुनरित्यादि स्वेच्छानिर्माणौचित्यात्** स्वेच्छया निर्माणे आर्तिच्छेदकशक्तिनिर्माणे योग्यत्वात् सामर्थ्यात्। **अथवेत्यादि। तस्यामप्यवस्थायां** नखविदारणेन हननावस्थायामपि कारुणिकत्वं, **आर्तिमेव छिन्दन्ति न तु कश्चित् प्राणिनमिति। किं चेत्यादि भाववृत्तयः** धर्मप्रधानाः **आक्षेपात्** द्रव्ये

[1](नि) संमोह. [2](नि) प्रति. [3](कौ) क्लेशकारक. [4](कौ) किंगुणाः.

बालचन्द्रत्वं ध्वन्यते। आयासनेन तत्सन्निधौ चन्द्रस्य विच्छायत्वप्रतीतिरहृद्यत्वप्रतीतिश्च ध्वन्यते; [1]आयासकारित्वं च नखानां सुप्रसिद्धम्; नरहरिनखानां तच्च लोकोत्तरेण रूपेण प्रतिपादितम्। किं च तदीयां स्वच्छतां कुटिलिमानं चावलोक्य बालचन्द्रः स्वात्मनि खेदमनुभवति–तुल्येऽपि स्वच्छकुटिलाकारयोगे अमी प्रपन्नार्तिनिवारणकुशलाः न त्वहम्–इति व्यतिरेकालङ्कारो ध्वनितः[2]। किं चाहं पूर्वमेक एवासाधारणवैशद्यहृद्याकार-योगात्समस्तजनाभिलषणीयताभाजनमभूवम्, अद्य पुनरेवंविधा नखा दश बालचन्द्राकाराः संतापार्तिच्छेदकुशलाश्चेति तानेव[3] लोको बालेन्दुबहुमानेन पश्यति, न तु मामित्याकलयन्बालेन्दुरविरतमायासमनुभवतीवेत्युत्प्रेक्षापह्नुतिध्वनिरपि। एवं वस्त्वलंकार-रसभेदेन त्रिधा ध्वनिरत्र श्लोके अस्मद्गुरुभिर्व्याख्यातः॥

अथ प्राधान्येनाभिधेयस्वरूपमभिदधत्, अप्रधानतया प्रयोजनप्रयोजनम्,
I.1 तत्सम्बद्धं[4] प्रयोजनं च सामर्थ्यात् प्रकटयन् आदिवाक्यमाह **काव्यस्यात्मेति**॥ काव्यात्मशब्दसंनिधानादूबुधशब्दोऽत्र काव्यात्मावबोधनिमित्तक[5] इत्यभिप्रायेण विवृणोति **काव्यतत्त्वविद्भिरिति॥ आत्मशब्दस्य तत्त्वशब्देनार्थं विवृण्वानः सारत्वमपरशब्द-**वैलक्षण्यकारित्वं च दर्शयति। इतिशब्दः स्वरूपपरत्वं ध्वनिशब्दस्याचष्टे। तदर्थस्य विवादास्पदीभूततया–निश्चयाभावेनार्थत्वायोगात्। एतद्विवृणोति–**संज्ञित इति॥**

वर्तन्ते शुक्लादिवत्। बालचन्द्रत्वं नखानामित्यर्थात् प्रकरणाद्वा। **आयासकारित्वं चेत्यादि। लोकोत्तरेण रूपेण** निर्मलवक्रहृद्याकृत्या। **तुल्येऽपीत्यादि।** नैर्मल्यादिगुणसाधर्म्येऽपि नखानामुपमेयानामुपमानात् बालचन्द्रात् प्रपन्नार्तिच्छित्त्वमाधिक्यमस्तीति व्यतिरेकालङ्कारः।

**अहं पूर्वमित्यादि। उत्प्रेक्षापह्नुतिरिति।** उत्प्रेक्षाया अपह्नुतिः उत्प्रेक्षार्था वा अपह्नुतिरिति यावत्। बालेन्दुरविरतमायासमनुभवतीवेत्युत्प्रेक्षाया विशिष्टाकलनं कारणम्। तच्च **तानेव लोको बालेन्दु-बहुमानेन पश्यति** न मामित्येवं रूपम्। तत्र हि स्पष्टा अपह्नुतिः।

लोकदृष्ट्या नायं बालेन्दुः, नखा एव बालेन्दव इति प्रतिभासात्, न नखा एते, किं तर्हि बालेन्दव इति वा प्रतीतिः। सर्वथा सापह्नुतिरुत्प्रेक्षा समुत्थापनीया। **अथेत्यादि।** ध्वनिस्वरूपं प्रधानतया अभिधेयम्। सहृदयमनःप्रीतिरूपं प्रयोजनप्रयोजनमप्रधानम्, **तत्संबद्धं प्रयोजनं** प्रयोजनसंबद्धं **प्रयोजनम्।** मुख्यप्रयोजनम् ध्वनिस्वरूपज्ञानात्मकं, प्रयोजनप्रयोजनस्य प्रयोजनपूर्वकत्वात्। **सहृदयमनःप्रीतय** इति शाब्दत्वात् प्रयोजनप्रयोजनस्याप्राधान्यमुच्यते; आर्थत्वात् प्रयोजनस्याप्राधान्यम्॥

वस्तुतस्तु ध्वनिस्वरूपकथनस्य ध्वनिस्वरूपपरिज्ञानं मुख्यं प्रयोजनम्। तस्य प्रयोजनं मनः-समाह्लादः॥ अथ संग्रहविवरणयोरुभयोरपि यथायोगं युगपदेव व्याख्यानं चिकीर्षन्नाह–**काव्यात्म-शब्दसन्निधानादित्यादिना।**

**अपरशब्दवैलक्षण्यकारित्वं** जीवितादिशब्दभेदकारित्वं, जीवितादिशब्दादात्मशब्द एवास्य वाचक

[1](कौ) आयासन. [2]क.ख.घ.ङ.त.(नि) ध्वनिः. [3]ग.(नि) एवं. [4](कौ) तत्सम्बन्धं च. [5](कौ) निमित्त.

वस्तुतस्तु न तत्संज्ञामात्रेणोक्तम्। **अपि त्वस्त्येव** ध्वनिशब्दवाच्यं प्रत्युत समस्तसारभूतम्। न ह्यन्यथा बुधास्तादृशमामनेयुरित्यभिप्रायेण विवृणोति— **तस्य सहृदयेत्यादिना**॥ एवं तु युक्ततरम्— इतिशब्दो भिन्नक्रमो वाक्यार्थपरामर्शकः; ध्वनिलक्षणोऽर्थः काव्यस्यात्मेति यः समाम्नात इति। शब्दपदार्थकत्वे हि ध्वनिसंज्ञितोऽर्थ इति का सङ्गतिः? एवं हि ध्वनिशब्दः काव्यस्यात्मेत्युक्तं भवेत्, 'गवित्ययमाह' इति यथा। न च विप्रतिपत्तिस्थानम- सदेव, प्रत्युत सत्येव धर्मिणि धर्ममात्रकृता विप्रतिपत्तिः – इत्यलम्[1] अप्रस्तुतेन भूयसा सहृदयजनोद्वेजनेन। बुधस्यैकस्य प्रामादिकमपि तथाभिधानं स्यात्, न तु भूयसां तद्युक्तम्। तेन बुधैरिति बहुवचनम्। [2]तदेव व्याचष्टे—**परम्परयेति**॥ अविच्छिन्नेन प्रवाहेण तैरेतदुक्तम्, विनापि विशिष्टपुस्तक[3] निवेशनादित्यभिप्रायः। न च बुधा भूयांसोऽनादरणीयं वस्त्वादरेणोपदिशेयुः। **एतच्चादरेणोपदिष्टम्। तदाह— सम्यगाम्नातपूर्व इति॥** पूर्वग्रहणेनेदं- प्रथमता नात्र सम्भाव्यत इत्याह। व्याचष्टे च **सम्यक् आ समन्तादम्नातः**[4] **प्रकटित** इत्यनेन॥ **तस्येति॥** यस्याधिगमाय प्रत्युत यतनीयं का [5]तत्राभावसम्भावना? अतः **किं** कुर्मः? अपारं मौर्ख्यमभाववादिनामिति भावः। न चास्माभिरभाववादिनां विकल्पाः श्रुताः; किं तु सम्भाव्य दूष्यन्ते; अतः परोक्षत्वम्। न च भविष्यद्वस्तु दूषयितुं युक्तम्[6]। अनुपपन्नत्वादेव। तदपि बुद्ध्यारोपितं दूषयिष्यत[7] इति चेत्, बुद्ध्यारोपितत्वादेव **भविष्यत्त्वहानिः**। अतो भूतकालोन्मेषा[8]त्पारोक्ष्याद्विशिष्टाद्यतनत्वप्रतिभानाच्च लिट्[9]- **प्रयोगः** कृतः —**जगदुरिति॥** तद्व्याख्यानायैव सम्भाव्यदूषणं प्रकटयिष्यति। सम्भावनापि

उत्कृष्टतया युक्त इति। **इति शब्द इत्यादि** यथा दिलीप इतीत्यत्र। **एवं तु युक्ततरमिति**। एवं ध्वनिशब्दस्यार्थपरत्वं स्वस्वरूपपरत्वाद्युक्ततरमित्यर्थः॥ एतदेव स्फुटयति—**इतिशब्दो। भिन्नक्रम** इत्यादिना। एवं पुनरत्र इतिशब्दस्य स्वरूपपरत्वाभिसन्धिना **ध्वनिसंज्ञित** इति विवरणं कृतमिति परिकल्पनं न युक्तमित्याह— **शब्दपदार्थकत्वे हीत्यादि॥ तेन बुधैरिति बहुवचनमिति** सूत्रगतबुधशब्दार्थनिरूपणं तत्स्थिरीकरणार्थम्। **तदेव व्याचष्टे परम्परयेति** विवरणप्रदर्शनम्। **एतच्चादरेणोपदिष्टमित्यत्र** संवादतया सम्यगाम्नातपूर्व इति संग्रहग्रहणम्। तत्र दर्शितपूर्वग्रहणाभिप्रायप्रसाधनार्थं विवरणं प्रदर्शयति— **व्याचष्टे चेत्यादिना**—

तत्रैव तस्य सम्यगाम्नातः प्रकटित इति व्याख्यानं कृतम्। **संभाव्य दूष्यन्त** इति। एवं ब्रूयुरिति **संभाव्य** दूष्यन्ते। यदप्युक्तमित्यादिना अनुभाष्य तदप्ययुक्तमित्यादियुक्तिबलेन खण्ड्यन्ते, **अतः परोक्षतेति।** अतः संभावनया **बुद्ध्यारोपितत्वादेव भविष्यत्वहानिरिति।** बुद्ध्यारोपितमिति खलु ब्रूषे, न तु बुद्धावारोपयिष्यमाणमिति आरोप्यमाणमिति वा, अतो निष्ठाप्रत्ययवशात् भूतत्वमेवेत्यर्थः।

**विशिष्टाद्यतनत्वं** बहिः सत्ताविशिष्टाद्यतनत्वम्। **तद्व्याख्यानायैव संभाव्य दूषणं**

[1](कौ) अतिविस्तरेण. [2]क.ख. एतदेव. [3]क.ख. (का) पुस्तकेषु विनिवेश०. [4]क.ख. समाख्यातः सम्यगासमन्तात् ख्यातः. [5]क.ख. तत्रासम्भावना. [6]क.ख.ग. शक्यम्. [7]क.ख. दूष्यते. [8]क.ख.ग. परोक्ष. [9]क.ख.ग. लिटा प्रयोगः.

नेयमसम्भवतो युक्ता, अपि तु सम्भवत एव। अन्यथा सम्भावनानामपर्यवसानं स्यात्, [1]तद्दूषणानां च। अतः सम्भावनामभि[2]धायिष्यमाणां समर्थयितुं पूर्वं [3]सम्भवन्तीत्याह। सम्भाव्यन्त इति तूच्यमानं पुनरुक्तार्थमेव स्यात्। न च सम्भवस्यासम्भावना[4], अपि तु सा वर्तमानतैव स्फुटेति वर्तमानेनैव निर्देशः। [5]ननु सम्भवद्वस्तुमूलया सम्भावनया यत्सम्भावितं तद्दूषयितुमशक्यमित्याशङ्क्याह--**विकल्पा इति॥** न तु वस्तु सम्भवति तादृक् यत इयं सम्भावना। अपितु विकल्पा एव। ते च तत्त्वावबोधवन्ध्यतया स्फुरेयुरपि। अत एव 'आचक्षीरन्' इत्यादयोऽत्र सम्भावनाविषया लिङ्प्रयोगा अतीतपरमार्थत्व एव पर्यवस्यन्ति। यथा--

'यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् ।
दण्डमादाय लोकोऽयं शुनः काकांश्च वारयेत् ॥'

इत्यत्रार्थाद्यद्येवं का[6]यस्य दुष्टता स्यात्तदैवमवलोक्येतेति भूतप्राणतैव। यदि नस्यात्ततः किं स्यादित्यत्रापि किं वृत्तम्, यदि [7]पूर्ववन्न भवनस्य सम्भावनेत्ययमेवार्थः; इत्यलमप्रकृतेन बहुना॥

तत्र समयापेक्षणेन शब्दोऽर्थप्रतिपादक इति कृत्वा वाच्यव्यतिरिक्तं नास्ति व्यङ्ग्यम्। सदपि वा तदभिधावृत्त्याक्षिप्तं[8] शब्दावगतार्थबलाकृष्टत्वाद्भाक्तम्। तदनाक्षिप्तमपि वा न वक्तुं शक्यम्, कुमारीष्विव भर्तृसुखमतद्वित्सु इति त्रय एवैते

**प्रकटयिष्यतीति।** तद्व्याख्यानायैव जगदुरिति सूत्रपदव्याख्यानायैव दूषणम्। तत्र केचिदाचक्षीरन्नित्यादि परमतं प्रकटयिष्यतीति। वृत्तिकृदिति शेषः। **अतः संभावनामित्यादि।** आचक्षीरन् ब्रूयुः, कथयेयुरिति संभावनैवाभिधास्यते।

**समर्थयितुमिति।** यत्संभवति तत्संभाव्यत इति व्याप्त्या समर्थनम्। **संभाव्यन्त इति तूच्यमानमिति।** संभावनास्संभाव्यन्त इति हि पुनरुक्तम्। **न च संभवस्यासंभावनेति।** केवलं संभवस्यासंभावना। नेत्येवेत्यर्थः। **अपि त्वित्यादि।** वर्तमानतैवापीत्यर्थः। **ननु संभवदित्यादि।** संभावितं संभवद्वस्त्वेवेत्यर्थः। विकल्पाः वस्तुशून्यःप्रत्ययाः न तु भेदाः। **न तु वस्त्वित्यादिना** विकल्पशब्दार्थं विवृणोति। "शब्दानुपाती वस्तुशून्यःप्रत्ययो विकल्पः" एतदुक्तं भवति--अत्र विकल्पा एव संभाव्यन्ते, न ग्रहणं स्मरणं वा। एते वस्तुस्पर्शिनी भवतः। विकल्पास्तु वस्तुरहिता एव स्युः। तेषां संभावनायां कथं तद्विषयो वस्तु संभवतीति। तर्हि कथं संभावनायास्संभवद्वस्तुमूलत्वमुक्तमिति चेत्, विकल्पाः स्वयं संभवन्तीति कृत्वोक्तम्। तेषां विषयभूतं वस्तु नास्तीत्येवोच्यते॥ **यदि नामेत्यादि।**

अथ सामान्येनाभाववादस्य भाक्तवादस्यानिर्वचनीयवादस्य च स्वरूपं प्रकाशयति—**तत्र समयापेक्षणेनेत्यादिना॥**

[1]क.ख.ग. 'तत्' नास्ति. [2]क.ख.ग.(नि) सम्भावनानांमभिधायिष्यमाणानाम्. [3]ग.घ.(नि) सम्भवति. [4](नि) सम्भवस्य, घ.च. सम्भवस्यासम्भावना. [5]क.ख.(नि) नन्वसम्भव०. [6](नि) काव्यस्य. [7]क.ख.(नि) यदि न पूर्वं भवनस्य. [8]अभिधाक्षिप्तम्.

प्रधानविप्रतिपत्तिप्रकाराः। तत्राभावविकल्पस्य त्रयः प्रकाराः। शब्दार्थगुणालङ्काराणामेव शब्दार्थशोभाकारित्वाल्लोकशास्त्रातिरिक्तसुन्दरशब्दार्थमयस्य काव्यस्य न शोभाहेतुः कश्चिदन्योऽस्ति योऽस्माभिर्न गणित इत्येकः प्रकारः। यो वा न[1] गणितः स शोभाकार्येव न[1] भवतीति द्वितीयः प्रकारः। अथ शोभाकारी भवति तर्हि अस्मदुक्त एव गुणे वा अलङ्कारे वा अन्तर्भवति; नामान्तरकरणे तु किर्यादिदं पाण्डित्यम्; अथापि गुणेष्वलङ्कारेषु वा [2]नान्तर्भावः, किञ्चिद्विशेषलेशमाश्रित्य नामान्तरकरणम्, उपमा-विच्छित्तिप्रकाराणामसंख्यत्वात्; तथापि गुणालंकारव्यतिरिक्तत्वाभाव एव; तावन्मात्रेण च किं कृतम्[3], अन्यस्यापि वैचित्र्यस्य शक्योत्प्रेक्षत्वात्। चिरन्तनैर्हि भरत-मुनिप्रभृतिभिर्यमकोपमे शब्दार्थालंकारत्वेनेष्टे तत्प्रपञ्चदिक्प्रदर्शनं त्वन्यैरलंकारकारैः कृतम्; तत्र यथा 'कर्मण्यण्' इत्यत्र कुम्भकाराद्युदाहरणं श्रुत्वा स्वयं नगरकारादिशब्दा उत्प्रेक्ष्यन्ते; तावता क आत्मनि बहुमानः? एवं प्रकृतेऽपीति तृतीयः प्रकारः। एवमेकस्त्रिधा विकल्पः अन्यौ च द्वौ इति पञ्च विकल्पा इति तात्पर्यार्थः। तानेव क्रमेणाह—**शब्दार्थशरीरं तावदित्यादिना॥** तावद्ग्रहणे कस्याप्यत्र न विप्रतिपत्तिरिति दर्शयति॥ तत्र **शब्दार्थौ**[4] तावन्न ध्वनिः। संज्ञामात्रे हि को गुणः। अथ शब्दार्थयोर्यत[5]श्चारुत्वं स ध्वनिः, तथापि द्विविधं चारुत्वम्—स्वरूपमात्रकृतं चारुत्वं शब्दालंकारेभ्यः, संघटनाश्रितं तु शब्दगुणेभ्य; एवमर्थानां चारुत्वं स्वरूपमात्रनिष्ठमुपमादिभ्यः संघटनापर्यवसितं त्वर्थगुणेभ्य इति न गुणालंकारव्यतिरिक्तो ध्वनिः कश्चित्। **संघटनाधर्मा इति।** शब्दार्थयोरिति शेषः। यद्गुणालंकारव्यतिरिक्तं तच्चारुत्वकारि न भवति, नित्यानित्यदोषा असाधुदुःश्रवादय इव। चारुत्वहेतुश्च ध्वनिः। तन्न तद्व्यतिरिक्त इति व्यतिरेकी हेतुः। ननु वृत्तयो रीतयश्च यथा गुणालंकारव्यतिरिक्ताश्चारुत्वहेतवश्च तथा ध्वनिरपि तद्व्यतिरिक्तश्च चारुत्वहेतुश्च भविष्यतीत्यसिद्धो व्यतिरेक इत्यनेनाभिप्रायेणाह— **तदनतिरिक्तवृत्तय**

अथाभावविकल्पस्य त्रिप्रकारत्वं तत्तात्पर्यं च पर्यालोचयति— **तत्राभावविकल्पस्येत्यादिना।**

अथवा ध्वनिवादिनोऽपि नात्र विमतिरित्याशयेनेदमुच्यते इत्यभिप्रायेण प्रतीकमुपादत्ते— **शब्दार्थशरीरं तावदित्यादिनेति॥**

इह विधेयमेव वक्तव्यं न व्यावर्त्यं, अनाशङ्कनीयत्वादित्याशयेनेदं पदमुक्तमित्यभिसन्धिनाह— **तत्रेति**— शब्दगुणा माधुर्यादयः अर्थगुणाश्च त एवोभयेऽपि वामनोक्ता अत्र गृह्यन्ते। अभिहितेऽर्थे सौगतनीत्या व्यतिरेक्यनुमानमाह— **यद्गुणालङ्कारेत्यादि।** अथ विवरणकाराभिप्रायेणोक्तानुमानस्या-

1 **'यो वा न गणितः' इत्यञ्जनानुसारीपाठः.** 2 **(नि) वान्तर्भावः.** 3 **क.ख.ङ.(नि) कृत्यम्.** 4 **क.ख.ग.ङ.च.(नि) शब्दार्थो.** 5 **क.ग.घ.(नि) 'यत' नास्ति.**

**इति**।। नैव वृत्तिरीतीनां तद्व्यतिरिक्तत्वमसिद्धम्। तथा हि– अनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्वस्वरूपविवेचनाय वर्गत्रयसम्पादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः, 'वर्तन्ते अनुप्रासभेदा आसु' इति। यदाह– "सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु। पृथक् पृथगनुप्रासमुशन्ति कवयस्तथा।।" इति। पृथक् पृथगिति। परुषानुप्रासा[1] नागरिका; मसृणा[2]नुप्रासा उपनागरिका, ललितनागरिकया विदग्धया उपमितेति कृत्वा; मध्यमं अकोमलम् अपरुषमित्यर्थः। अत एव वैदग्ध्यविहीनस्वभावसुकुमारापरुषग्राम्यवनितासादृश्यादियं वृत्तिर्ग्राम्येति। तत्र तृतीयः कोमलानुप्रासः –इति वृत्तयोऽनुप्रासजातय एव। न चेह वैशेषिकवद्वृत्तिर्विवक्षिता, येन जातौ जातिमतो वर्तनं न स्यात्; तदनुग्रह एव हि तत्र वर्तमानत्वम्। यदा[3]ह कश्चित्–

"लोकोत्तरे हि गाम्भीर्ये वर्तन्ते पृथिवीभुजः"

इति। तस्माद्वृत्तयोऽनुप्रासेभ्यो[4]ऽनतिरिक्तवृत्तयः नाभ्यधिकव्यापाराः। अत एव व्यापारभेदाभावान्न पृथगनुमेय[5]स्वरूपा अपीति वृत्तिशब्दस्य व्यापारवाचिनोऽभिप्रायः।

सिद्धत्वमाशंक्य परिहर्तुमाह– **नैवेत्यादि**तद्व्यतिरिक्तत्वमसिद्धमिति गुणालङ्कारव्यतिरिक्तत्वं, गुणा माधुर्यादयः, अलङ्कारा अनुप्रासादयः इत्युक्तम्। प्रतिज्ञातमुपपादयति– **तथा हीत्यादिना। अनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया** परुषललितमध्यमभेदेन त्रयोऽनुप्रासाः। तत्र दीप्तैर्वर्णैरारब्धः परुषानुप्रासः, मसृणैर्ललितः, मध्यमैर्मध्यमः, इत्यस्ति प्रदर्शनीयो नियमः। तादृशनियमार्थंतथा तेषां स्वरूपविभागप्रदर्शनाय **यद्धर्मत्रयसंपादनं वर्गत्रयसंपादनं वा।** पाठभेदेन, तदर्थम**नुप्रासजातयः** अनुप्रासभेदाः वृत्तित्वेनोक्ता इत्यर्थः।। **सरूपेत्यादि।।**
सरूपभूतो व्यञ्जनन्यासो यत्र तं एतासु नागरिकोपनागरिकाग्राम्यासु। परुषानुप्रासे नागरिका वृत्तिः। मसृणानुप्रासे उपनागरिका। मध्यमानुप्रासे ग्राम्या। तत्र प्रवृत्तिनिमित्तमाह– **नागरिकयेति, मध्यममकोमलमपरुषमिति।** ये दीप्ताश्च मसृणाश्च न भवन्ति तैरारब्धो मध्यमानुप्रास इत्यर्थः। निगमयति– **वृत्तयोऽनुप्रासजातय एवेति।।** ननु अनुप्रासजातय एव वृत्तयः। तास्वनुप्रासा वर्तन्ते। तज्जातौ जातिमद्वर्तत इति स्यात्। नैतद्युक्तं वैपरीत्यस्योपपत्तेः। एतदेवोपपदार्थविदामभिमतमित्यत्राह– **न चेहेत्यादि।**

वैशेषिकैस्तावज्जातिमति जातेर्वृत्तिरुच्यते। सा तु नात्र विवक्षिता। तदा खलु वृत्तिषु अनुप्रासानां वृत्तिर्न जाघटीतीति। किं तर्हि अनुग्रहरूपेयं विवक्षितेत्यर्थः। वृत्तिरनुग्राहिका। **तस्माद्वृत्तय** इत्यादि। वृत्तीनां न पृथग्व्यापारः स्वयमेव वृत्तयो व्यापारा इत्यर्थः।

[1]ग.(नि) परुषानुप्रासः. [2]ग.(नि) मसृणानुप्रासः. [3]क.ख.ग.घ.(नि) यथाह. [4]क.ख.घ.च.(का) अनुप्रासादिभ्यः. [5](कौ)म. गभिधेय०.

अनतिरिक्तत्वादेव वृत्तिव्यवहारो भामहादिभिर्न कृतः। उद्भटादिभिः प्रयुक्तेऽपि तस्मिन्नार्थः कश्चिदधिको हृदयपथमवतीर्ण इत्यभिप्रायेणाह— **गताः श्रवणगोचरमिति। रीतयश्चेति।** तदनतिरिक्तवृत्तयोऽपि गताः श्रवणगोचरमिति सम्बन्धः। तच्छब्देनात्र माधुर्यादयो गुणाः। तेषां च [1]समुचितवृत्त्यर्पणे यदन्योन्यमेलनक्षमत्वेन पानक इव गुडमरिचादिरसानां संघातरूपतागमनं दीप्तललितमध्यमवर्णनीयविषयं गौडवैदर्भ-पाञ्चालदेशहेवाकप्राचुर्यदृशा तदेव त्रिविधं रीतिरित्युक्तम्। जातिर्जातिमतो नान्या समुदायश्च समुदायिनो नान्य इति वृत्तिरीतयो न गुणालंकारव्यतिरिक्ता इति स्थित एवासौ व्यतिरेकी हेतुः। तदाह— **कोऽयं ध्वनिरिति॥** नैष चारुत्वस्थानम्, शब्दार्थरूपत्वाभावात् ; नापि चारुत्वहेतुः, गुणालंकारव्यतिरिक्तत्वात्। तेनाखण्डबुद्धिसमास्वाद्यमपि काव्यमपोद्धारबुद्ध्या यदि विभज्यते तथाप्यत्र ध्वनिशब्दवाच्यो न कश्चिदतिरिक्तोऽर्थो लभ्यत इति नामशब्देनाह॥

ननु मा भूदसौ शब्दार्थस्वभावः, मा च भूत्तच्चारुत्वहेतुः; तेन गुणालंकारव्यति-रिक्तोऽसौ स्यादित्याशङ्क्य द्वितीयमभाववादप्रकारमाह—**अन्य इति॥** भवत्वेवम्, तथापि नास्त्येव ध्वनिर्यादृशस्तव लिलक्षयि[2]षितः। काव्यस्य ह्यसौ कश्चिद्वक्तव्यः; न चासौ गीतनृत्तवाद्यादिस्थानीयः काव्यस्य कश्चित्। कवनीयं काव्यम्, तस्य भावः काव्यत्वम्। न च नृत्तगीतादि कवनीयमित्युच्यते॥ **प्रसिद्धेति॥** प्रसिद्धं प्रस्थानं शब्दार्थौ तद्गुणालङ्काराश्चेति। प्रतिष्ठन्ते परम्परया वि[3]हरन्ति येन मार्गेण तत्प्रस्थानम्।

उक्तार्थे प्रमाणं दर्शयति। **अनतिरिक्तत्वादेवेत्यादि। ता अपि गताः श्रवणगोचरमिति।** अनुप्रासव्यतिरिक्तत्वेन **हृदयपथमवतीर्णा** इत्याशयः॥ वैदर्भी गौडीया पाञ्चालीति रीतयोऽपि माधुर्या-दिगुणाविनाभावादनुप्रासाव्यतिरिक्ता एवेत्याह— **रीतयश्च वैदर्भीप्रभृतय इति॥** तत्रानुषङ्गाद्वाक्यपूरणं प्रकाशयति—**तदनतिरिक्तवृत्तयो गताः श्रवणगोचरमिति संबन्धः इति।** अत्रानुषङ्गसिद्धस्य तच्छब्दस्य परामृश्य भेदं दर्शयति। **तच्छब्देनात्र माधुर्यादयो गुणा इति।** माधुर्यादीनां रीत्यात्मकत्वं प्रकटयति— **तेषां चेत्यादि। वर्णनीय**शब्देन वर्ण उच्यते। **पानक इवेति।** गुडमरिचशुण्ठ्यादिकृतो दाहतृष्णानिवारकः पेयविशेषः पानकम्। वैदर्भ्यादिशब्दानां प्रवृत्तिनिमित्तमाह **गौडवैदर्भेत्यादि-- हेवाकः** स्वाच्छन्द्यम्. वृत्तेरलङ्कारस्य चानुप्रासरूपस्य जातिजातिमद्भावः। रीतिगुणयो समुदायसमुदायिभावः। एवं प्रकृतं व्यतिरेकिणं स्थापयति— **स्थित एवेत्यादि।**

**ध्वनिर्नामे**त्यत्र नामशब्देन सूचितमर्थं विवृणोति— **नैव चारुत्वस्थानमित्यादि।** अथ द्वितीयस्या-भाववादप्रकारस्योत्थापनं करोति— **ननु मा भूदित्यादिना। भवत्वेवमिति।** एवं गुणालङ्कार-व्यतिरिक्तस्वभाव इत्यर्थः। **न चासावित्यादि।** अकवनीयत्वात् नृत्तादिसदृशो भवन्नसौ ध्वनिरूपः प्रकारो न काव्यस्य युक्त इत्यर्थः॥ तत्र हेतुमाह—**कवनीयमित्यादीति। प्रसिद्धेत्यादीति॥ प्रसिद्धप्रस्थान-व्यतिरेकिण** इत्यस्य पदस्य प्रसिद्धशब्दार्थतद्गुणालङ्कारव्यतिरेकिण इत्यर्थ इति भावः। **मार्गस्य**

[1]क.ख.(नि) समुचितचित्तवृत्त्यर्पणे. [2]क.ख.(नि) लिलक्षयिषतः. [3]म. व्यवहरन्ति.

**काव्यप्रकारस्येति॥** काव्यप्रकारत्वेन हि तव स मार्गोऽभिप्रेतः, 'काव्यस्यात्मा' इत्युक्तत्वात्। ननु कस्मात्तत्काव्यं न भवतीत्याह—**सहृदयेति॥ मार्गस्येति॥** नृत्त-गीताक्षिनिकोचादिप्रायस्येत्यर्थः। **तदिति॥** सहृदयेत्यादिकाव्यलक्षणमित्यर्थः। ननु ये तादृशमपूर्वं काव्यरूपतया जानन्ति त एव सहृदयाः। तदभिमतत्वं च नाम काव्य-लक्षणमुक्तप्रस्थानातिरेकिण एव भविष्यतीत्याशङ्क्याह— **न चेति॥** यथा हि खड्गलक्षणं करोमीत्युक्त्वा आतानवितानात्मा प्राव्रियमाणस्वरूपः सकलदेहाच्छादकः सुकुमार-श्चित्रतन्तुदिरचितः संवर्तनविवर्तनसहिष्णुरच्छेदकः सुच्छेद उत्कृष्टः खड्ग इति ब्रुवाणः, परैः पटः खल्वेवंविधो भवति न खड्ग इत्युक्ततया पर्यनुयुज्यमान एवं ब्रूयात्— ईदृश एव खड्गो ममाभिमत इति, तादृगेवैतत्। प्रसिद्धं हि लक्ष्यं भवति न कल्पितमिति भावः। तदाह—**सकलविद्वदिति॥** विद्वांसोऽपि तत्समयज्ञा एव भविष्यन्तीति आशङ्का सकलशब्देन निराकरोति। एवं हि कृतेऽपि न किंचित्कृतं स्यात्; तस्मादुन्मत्तता परं प्रकटितेति भावः॥

यस्त्वत्राभिप्रायं व्याचष्टे—जीवितभूतो ध्वनिस्तावत्तवाभिमतः; जीवितं च नाम प्रसिद्धप्रस्थानातिरिक्तम्, अलंकारकारैरनुक्तत्वात्; तच्च न काव्यमिति लोके प्रसिद्ध-मिति—तस्येदं सर्वं स्ववचनविरुद्धम्। यदि हि तत्काव्यस्यानुप्राणकं तेनाङ्गीकृतं पूर्वपक्षवादिना तच्चिरंतनैरनुक्तमिति प्रत्युत लक्षणार्हमेव भवति। तस्मात्प्राक्तन एवा-त्राभिप्रायः॥

ननु भवत्वसौ चारुत्वहेतुः **शब्दार्थगुणालंकारान्तर्भूतश्च**, तथापि ध्वनिरित्यमुया भाषया जीवितमित्यसौ न केनचिदुक्त **इत्य**भिप्रायमाशङ्क्य तृतीयमभाववादप्रकारमुपन्य-स्यति— **पुनरपर इति॥** कामनीयकमिति कमनीयस्य कर्म, चारुत्वधी[1]हेतुतेति यावत्। ननु विच्छित्तीनामसंख्येयत्वात् काचित्तादृशी विच्छित्तिरस्माभिर्दृष्टा या नानुप्रासादौ नापि

**तत्संभवतीत्यत्र** तच्छब्देन समनन्तरोक्तं काव्यलक्षणं परामृश्यत इति दर्शयति— **तदित्यादिना।** **तत्समयान्तःपातिनः** ध्वनिदर्शनान्तःपातिन इत्यादिकं व्याख्यातुमाह— **ननु ये तादृशमपूर्वमित्यादि।** **खड्गलक्षणं करोमि।** खड्गलक्षणमुपदिशामि। अत्र मतान्तरमुपन्यस्य दूषयति— **यस्त्वत्राभिप्रायमित्यादि।** **तच्चिरन्तनैरित्यादि।** ध्वनिर्न लक्षणार्ह इति खल्वभाववादिनोऽभिप्रायः॥ स तु विपरीतः कृतः लक्षणार्हः इत्यभिप्रायापादनात्। जीवितभूतं सच्चिरन्तनैर्नोक्तं, तस्मादवश्यं वक्तव्यं तदित्युक्तेरिति। अथ तृतीयाभाववादोपन्यासस्य पीठिकां रचयति। **ननु भवत्वसावित्यादिना॥**

'चारुत्वहेतुर्हि' इत्युक्तेश्चारुत्वहेतुरेव कमनीयशब्देनाभिप्रेत इत्याह— **चारुत्वधीहेतुतेति।**

[1]क.ख.ग.घ.च.(नि) चारुत्वहेतु.

माधुर्यादावुक्तलक्षणेऽन्तर्भवेदित्याशङ्क्याभ्युपगमपूर्वकं परिहरति—**वाग्विकल्पा-नामिति॥** वक्तीति वाक् शब्दः, उच्यत इति वागर्थः; उच्यतेऽनयेति वागभिधाव्यापारः; तत्र शब्दार्थवैचित्र्यप्रकारोऽनन्तः; **अभिधावैचित्र्यप्रकारोऽप्यसंख्येयः॥ प्रकारलेश इति॥** स हि चारुत्वहेतुर्गुणो वालङ्कारो वा। स च सामान्यलक्षणेन संगृहीत एव। यदाह—'काव्यशोभायाः कर्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलङ्काराः' इति। तथा "वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः" इति। ध्वनिर्ध्वनिरिति वीप्सया[1] संभ्रमं सूचयन्न[2]नादरं दर्शयति॥ **नृत्यत इति॥** तल्लक्षणकृद्भिस्त[3]द्युक्तकाव्यविधातृभिस्[4]तच्छ्र-वणोद्भूतचमत्कारैश्च तत्प्रतिपत्तृभिरिति शेषः। ध्वनिशब्दे कोऽत्यादर इति भावः॥. **एषा दशेति॥** स्वयं दर्पः परैश्च स्तूयमानतेत्यर्थः। वाग्विकल्पा वाक्प्रवृत्तिहेतु-प्रतिभाव्यापारप्रकारा इति वा। तस्मात्प्रवादमात्रमिति सर्वेषामभाववादिनां साधारण उपसंहारः। यतः शोभाहेतुत्वे गुणालङ्कारेभ्यो न व्यतिरिक्तः, यतश्च व्यतिरिक्तत्वे न शोभाहेतुः, यतश्च शोभाहेतुत्वेऽपि नादरास्पदं तस्मादित्यर्थः। न चेयमभावसंभावना निर्मूलैव दूषितेत्याह—**तथा चान्येनेति॥** ग्रन्थकृत्समानकालभाविनैव मनोरथनाम्ना कविना। यतो न सालंकृति अतो न मनःप्रह्लादि। अनेनार्थालङ्काराणामभाव उक्तः। व्युत्पन्नै रचितं च यन्न वचनैरिति शब्दालङ्काराणाम्। वक्रोक्तिरुत्कृष्टा संघटना, तच्छून्यमिति शब्दार्थगुणानाम्। वक्रोक्तिशून्यशब्देन सामान्यलक्षणाभावेन सर्वा[5]लंकाराभाव उक्त इति केचित्। तैः पुनरुक्तं न परिहृतमेवेत्यलम्॥ **प्रीत्येति॥** गतानुगतिकानुरागेणेत्यर्थः ॥**सुमतिनेति॥** जडेन तु पृष्टो भ्रूभङ्गकटाक्षैरेवोत्तरं ददत्तत्स्वरूपं काममाचक्षीतेति भावः॥ [6]एते चाभावविकल्पाः शृङ्खलाक्रमेणागताः, न त्वन्योन्यमसंबद्धा एव। तथा हि तृतीयाभावप्रकारनिरूपणोपक्रमे पुनःशब्दस्यायमेवाभिप्रायः, उपसंहारैक्यं च सङ्गच्छते।

'वाक्'शब्देन शब्दश्चार्थश्चाभिधा च कथ्यत इति प्रदर्शयितुं निरुक्तिमाह। गुणानामलंकाराणां च चारुत्वहेतुत्वं सामान्येनोक्तमित्यत्र संवादमाह— 'काव्यशोभायाः' इत्यादि। वक्राभिधेयशब्दोक्तिरिति वक्रोक्तिरित्यर्थः॥ **मुकुलितलोचनैरित्यस्य** विशेष्यं सामर्थ्यसिद्धमिति दर्शयति— **तल्लक्षणकृद्भिरित्यादि॥ एषा** दशेत्यस्य विकल्पेनार्थान्तरमाह—**वाग्विकल्पा** इत्यादि। उपसंहारसाधारण्यं स्पष्टयति— **यतः शोभाहेतुत्वे** इत्यादि। **समानकालभाविना**— समानकालभवेन। **यस्मिन्नस्तीत्यादि।**

अत्र वक्रोक्तिशब्देन शब्दार्थगुणालङ्काराणां त्रयाणामप्यवरोधे पौनरुक्त्यमिति पक्षान्तरो-पन्यासपुरःसरमाह— **वक्रोक्तिशून्यशब्देनेत्यादि॥** एषां अभावविकल्पानां यः परस्परं संबन्ध उद्घाटितः। तत्र प्रमाणमाह— **तथाहि तृतीयेत्यादि॥**

[1]क.ख.ग.(नि) वीप्सायाम्. [2]क.ख.ग.ङ.च.(नि) (का) आदरम्. [3]अतद्युक्त. [4](का) विधायिभिः। अतच्छ्रवण—इति कौमुद्यनुसारी पाठः. [5]ग. शब्दालंकार०. [6]क.ख.ग.घ.ङ.च.(नि) (का) एवमेते.

अभाववादस्य संभावनाप्राणत्वेन भूतत्वमुक्तम्। भाक्तवादस्त्वविच्छिन्नः पुस्तकेष्वित्यभिप्रायेण भाक्तमाहुरिति नित्यप्रवृत्तवर्तमानापेक्षयाभिधानम्। भज्यते सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यत इति भक्तिर्धर्मः, अभिधेयेन सामीप्यादिः; तत आगतो भाक्तः लाक्षणिकोर्थः। यदाह—

"अभिधेयेन सामीप्यात्सारूप्यात्समवायतः।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता॥"

इति। गुणसमुदायवृत्तेश्च शब्दस्यार्थभागस्तैक्ष्ण्यादिर्भक्तिः; तत आगतो गौणोऽर्थो भाक्तः। भक्तिः प्रतिपाद्ये सामीप्यतैक्ष्ण्यादौ श्रद्धातिशयः; तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति गौणो लाक्षणिकश्च; मुख्यस्य चार्थस्य भङ्गो भक्तिः — इति; एवं मुख्यार्थबाधा निमित्तं प्रयोजनमिति त्रयसद्भाव उपचारबीजमित्युक्तं भवति॥ **काव्यात्मानं गुणवृत्तिमिति॥** सामानाधिकरण्यस्यायं भावः —यद्यप्यविवक्षितवाच्ये ध्वनिभेदे "निःश्वासान्ध इवादर्शः" इत्यादावुपचारोऽस्ति, तथापि न तदात्मैव ध्वनिः, तद्व्यतिरेकेणापि भावात् विवक्षितान्यपरवाच्यप्रभेदादौ, अविवक्षितवाच्येऽप्युपचार एव न ध्वनिरिति वक्ष्यामः। तथा च वक्ष्यति—

"भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।
अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया॥"
"कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम्" इति च।

गुणाः सामीप्यादयः, धर्मास्तैक्ष्ण्यादयश्च ; तैरुपायैर्वृत्तिरर्थान्तरे यस्य, तैरुपायैर्वृत्तिर्वा, शब्दस्य यत्र स गुणवृत्तिः शब्दोऽर्थो वा; गुणद्वारेण वा वर्तनं गुणवृत्तिरमुख्योऽभिधा-

नन्वयमभाववादो नास्त्येव परैः कृतः। कथं पुनस्तस्य प्रकारोपन्यासः क्रियते इत्यत्राह— **अभाववादेत्यादि।** भूतत्वं वस्तुवृत्तत्वं। अथ भाक्ततावादः पुनरयं न संभावनामात्रशरण इत्याह— **भाक्ततेत्यादि। नित्यप्रवृत्तवर्तमानेति।** "तिष्ठन्ति पर्वताः, स्यन्दन्ते नद्यः" इत्यत्र यथा लट् तथात्रापि इति भावः। **नित्यप्रवृत्त** इति भोजसूत्रम्। **भाक्त**शब्दस्य निरुक्तिमाह-- **भज्यत** इत्यादि। अयमर्थः। भक्तिशब्दश्च चतुर्धा— सेवनभङ्गश्रद्धातिशयभागार्थवृत्तिभेदेन। तत्र भङ्गार्थो भजिप्रकृतिः। अन्ये भजिप्रकृतयः। 'गङ्गायां घोष' इत्यादौ लाक्षणिके अर्थे सामीप्यादिधर्मो भक्तिरुच्यते। 'सिंहो देवदत्त' इत्यादौ गौणे शौर्यात्मकतैक्ष्ण्यादिर्भक्तिः॥ एतौ संबन्धात्मकौ। उभयत्र प्रयोजनमपि भक्तिः। मुख्यार्थबाधोऽपि भक्तिः। **तत आगतो भाक्तः** औपचारिक इति। **काव्यात्मा न गुणवृत्तिरित्यादि। उपचार एव न ध्वनिरिति॥** उपचारो गुणवृत्तिः। ध्वनिरर्थः प्रयोजनरूपः। अत उपचारस्य ध्वनेश्च परस्परं भेदः, न त्वैकात्म्यम्। तत उपचारो ध्वनेरुपलक्षणमेव भवतीति भावः। **वक्ष्याम इति।** रामादिशब्दार्थभेदनिरूपणे इति शेषः॥ **गुणा** इत्यादि। गुणवृत्तिश्शब्दश्चार्थश्च भवति। तत्र वृत्तिश्शब्दस्यैव नार्थस्येत्युक्तं भवति। व्यापारोऽपि गुणवृत्तिर्भवतीति दर्शयति— **गुणद्वारेण वेत्यादि॥** तत्र

[1] क.ख. सारूप्यात् सादृश्यात्, घ.ङ.च. सामीप्यात् सारूप्यात्.

व्यापारः। एतदुक्तं भवति–ध्वनतीति वा, ध्वन्यते इति वा, ध्वननमिति वा यदि ध्वनिस्तथाप्युपचरितशब्दार्थव्यापारातिरिक्तो नासौ कश्चित्। मुख्येऽर्थे ह्यभिधैवेति पारिशेष्यादमुख्य एव ध्वनिः, तृतीयराश्यभावात्। ननु केनैतदुक्तम् 'ध्वनिर्गुणवृत्तिः' इत्याशङ्क्याह–**यद्यपि चेति॥ अन्यो वेति॥** गुणालंकारप्रकार इति यावत् ॥**दर्शयतेति॥** भट्टोद्भटवामनादिना। भामहोक्तम् "शब्दःछन्दोऽभिधानार्थाः" इत्यभिधानशब्दस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषे–

"शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च" इति। वामनोऽपि "सादृश्याल्लक्षणा वक्रोक्तिः" इति॥ **मनाक्स्पृष्ट इति॥** तैस्तावद्ध्वनिदिगुन्मीलिता। यथालिखितपाठकैस्तु स्वरूपविवेकं कर्तुमशक्नुवद्भिस्तत्स्वरूपविवेको न कृतः, प्रत्युतोपालभ्यते, अभग्ननारिकेलकल्पः यथाश्रुततद्ग्रन्थोद्ग्रहणमात्रेणेति। अत एवाह–**परिकल्प्यैव-मुक्तमिति॥** यद्येवं न योज्यते तदा ध्वनिमार्गः स्पृष्ट इति पूर्वपक्षविधानं विरुध्यते॥ **शालीनबुद्धय इति॥** अप्रगल्भमतय इत्यर्थः। एते च त्रय उत्तरोत्तरं भव्यबुद्धयः। प्राच्या हि

ध्वनतीति गुणवृत्तेः शब्दत्वमवलम्ब्योच्यते। ध्वन्यत इत्यर्थत्वं ध्वननमिति व्यापारत्वम्। **तथापीत्यादि**-- य उपचरितः शब्दः अर्थश्च यः व्यापारश्च यः तेभ्योऽन्यो नासौ कश्चिद्गुणवृत्तिरूपोऽर्थ इत्यर्थः। तत्र हेतुमाह– **मुख्ये ह्यभिधैवेति।** फलितमर्थमाह– **पारिशेष्यादिति॥** मुख्यामुख्यव्यतिरिक्तस्तृतीयराशिः॥ अथोक्तस्य निर्विषयमाशङ्काकलुषीक्रियमाणं परिहर्तुमाह– **नन्वित्यादि॥** "शब्दः छन्दोऽभिधानार्था"– इति। "शब्दछन्दोभिधानार्था इतिहासाश्रयाः कथाः। लोको युक्तिः कलाश्चेति मन्तव्याः काव्यहेतवः" इति। ननु केन प्रकारेणात्र गुणवृत्त्या काव्यव्यवहारो दर्शितो भामहेन? अभिधानशब्देनेति चेत्। अभिधानशब्देन नामशासनमुच्यते न गुणवृत्तिरित्याशङ्क्य, मैवम् अभिधानशब्देनात्र गुणवृत्ति-रप्युक्तेत्येतत् विवरणच्छलेन संवादान्तरमाह– **अभिधानशब्दस्येत्यादि – यथा लिखितपाठकैः** अविशेषज्ञैः॥ **अभग्नेत्यादि**– अभग्ननालिकेरकल्पः निगूढान्तःसारः यथाश्रुतं श्रवणानुसारेण **तद्ग्रन्थः** ध्वनियुक्तपदबन्धः **उद्ग्रहणं** ग्रहणम्। उक्तं समर्थयति। **अत एवाहेति। यद्येवं न योज्यत इति॥ एवमिति।** तैर्ध्वनिदिगुन्मीलितेति च ध्वनिस्वरूपविवेको न कृत इति च प्रत्युत उपालभ्यत इति चेत्यर्थः। तदा **ध्वनिमार्गेत्यादि।** ध्वनिमार्गः स्पृष्ट इत्यनेन खलु पूर्वपक्षो विधीयते। भक्तिपरिग्रहेण ध्वनिमार्गः स्पृष्टः लक्षणाकरणेन पृथङ्नोक्तः॥ अतो भक्तिरेव ध्वनिः न त्वन्यः कश्चिदिति बलादुक्तमेव भवति

विपर्यस्ता एव सर्वथा; मध्यमास्तु तद्रूपं जानाना अपि संदेहेन निह्नुवते; अन्यास्तु अनिह्नुवाना अपि लक्षयितुं न जानत इति क्रमेण विपर्यय[1]सन्देहाज्ञानप्राधान्यमेषाम्[2]॥ **तेनेति॥** एकैकोऽप्ययं विप्रतिपत्तिरूपो वाक्यार्थो निरूपणे हेतुत्वं प्रतिपद्यत इत्येकवचनम्। एवंविधासु विमतिष्विति निर्धारणे सप्तमी। आसु मध्ये एकोऽपि यो विमतिप्रकारस्तेनैव हेतुना तत्स्वरूपं ब्रूम इति ध्वनिस्वरूपमभिधेयम्। अभिधानाभिधेयलक्षणयोर्ध्वनिशास्त्रयो-र्वक्तृश्रोत्रोर्व्युत्पाद्यव्युत्पादकभावः संबन्धः। विमतिनिवृत्त्या तत्स्वरूपज्ञानं प्रयोजनम्, शास्त्रप्रयोजनयोः साध्यसाधनभावः संबन्ध इत्युक्तम्। अथ श्रोतृगतप्रयोजन[3] प्रतिपादकं[4] 'सहृदयमनःप्रीतये' इति भागं व्याख्यातुमाह— **तस्य हीति॥** विमतिपदपतितस्येत्यर्थः। ध्वनेः स्वरूपं लक्षयतां संबन्धिनि मनसि हृदये आनन्दो निर्वृत्यात्मा चमत्कारापरपर्यायः प्रतिष्ठां परैर्विपर्यासाद्युपहतैरनुन्मील्यमानत्वेन स्थेमानं लभतामिति प्रयोजनं संपादयितुं तत्स्वरूपं प्रकाश्यत इति संगतिः। प्रयोजनं च नाम तत्संपादकवस्तुप्रयोक्तृताप्राणतयैव तथा भवतीत्याशयेन प्रीतये तत्स्वरूपम्[5] इत्येकवाक्यतया व्याख्येयम्। तत्स्वरूपशब्दं व्याचक्षाणः संक्षेपेण तावत्पूर्वोदीरितविकल्पपञ्चकोद्धरणं प्रथयति— **सकलेत्यादिना॥** सकलशब्देन सत्कविशब्देन च प्रकारलेशे कस्मिंश्चिदिति निराकरोति। अतिरमणीयमिति

इति। एवं पूर्वपक्षाविधाने भाक्तवादप्रतिक्षेपो निर्विषयः स्यात्। भट्टोद्भटादिभिः स्वग्रन्थेषु ध्वनिप्रसंगो न कृतः, केवलमभिधागुणवृत्तिव्यवहार एव कृत इति। **अथ तत्स्वरूपं ब्रूम** इत्यनेन विषयश्च संबन्धश्च प्रयोजनं च मुख्यं प्रादर्शिषतेत्याह— **तत्स्वरूपं ब्रूम इत्यादि।**

**अभिधानाभिधेय** इत्यत्र व्युत्क्रमो द्रष्टव्यः। **सहृदयमनःप्रीतये** इत्येतत्तु प्रयोजनप्रयोजन-प्रतिपादकमित्याह-- **अथ श्रोतृगते**त्यादि॥ पदार्थसङ्गतिमाह— **ध्वनेः स्वरूप**मित्यादिना।

ननु कारिकायां चतुर्थः पादः एकवाक्यतया प्रतीयते। न तु 'सहृदयमनःप्रीतय' इत्येतत् प्रयोजनप्रयोजनप्रतिपादकतया पृथग्वाक्यत्वेन प्रतीयते। ध्वनिस्वरूपवचनेन विशिष्टप्रीतेः प्रयोक्तृतया संबन्धात् स्वसंवादकस्य वस्तुनः प्रयोक्तुः खलु प्रयोजनं भवति। तदिह प्रीतिरेव। तत्कथं वाक्यभेद इत्याशंक्य, सत्यं कारिकायामेवं योजना कार्येत्याह— **प्रयोजनं च नामे**त्यादि।

**इत्याशयेन** इत्यभिप्रायेण। प्रीतेः प्रयोजनमिति रूपेणेत्यर्थः। **एकवाक्यतया व्याख्येयमिति।** कारिकायामिति शेषः॥

विवरणकारस्तु प्रयोजनप्रयोजनं प्रयोजनात् पृथगेवेति मन्यमानो वाक्यभेदं कृतवानिति तात्पर्यम्। अथोक्तां विकल्पपञ्चकोद्धरणसूचनां उपपादयति **सकलशब्देन** इत्यादिना।

**प्रकारलेशे कस्मिंश्चिदिति।** तृतीयाभाववादे हि संभवत्यपि कस्मिंश्चित् काव्यलक्ष्मविधायिभिः

[1]क.ख.ग.घ.(नि)(का) विपर्यास०. [2]क.ख.ग.(नि)(का) एतेषाम्. [3](कौ) प्रयोजनप्रयोजन. [4](कौ) प्रतिपादनम्. [5]क.ख.ग.(का) तत्स्वरूपं ब्रूमः.

भाक्ताद्व्यतिरेकमाह[1]। न हि 'सिंहो वटुः,' 'गङ्गायां घोषः' इत्यत्र रम्यता काचित्। उपनिषद्भूतशब्देन तु अपूर्वसमाख्यामात्रकरण इत्यादि निराकृतम्। अणीयसीभिरित्यादिना गुणालंकारानन्तर्भूतत्वं सूचयति। अथ चेत्यादिना तत्समयान्तःपातिन इत्यादि यत्सामयिकत्वं शङ्कितं तन्निरवकाशीकरोति। रामायणमहाभारतशब्देनादिकवेः प्रभृति सर्वैरेव सूरिभिरस्यादरः कृत इति दर्शयति। लक्षयतामित्यनेन वाचां स्थितमविषय इति परास्यति। लक्ष्यतेऽनेनेति लक्षो[2] लक्षणम्। [3]लक्षेण निरूपयन्ति लक्षयन्ति तेषाम्, लक्षणद्वारेण निरूपयतामित्यर्थः॥ **सहृदयानामिति॥** येषां काव्यानुशीलनाभ्यासवशाद्विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते स्वहृदयसंवादभाजः सहृदयाः। यथोक्तम्–

"योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना॥" इति।

**आनन्द इति॥** रसस्य चर्वणात्मनः प्राधान्यं दर्शयन् रसध्वनेरेव सर्वत्र मुख्यभूतमात्मत्वं[4] दर्शयति। तेन यदुक्तम्–

"ध्वनिर्नामापरो योऽसौ व्यापारो व्यञ्जनात्मकः।
तस्य सिद्धेऽपि भेदे स्यात् काव्येंऽशत्वं न रूपता॥" इति।

तदपहस्तितं भवति। तथा हि अभिधाभावनारसचर्वणात्मकेऽपि त्र्यंशे काव्ये रसचर्वणा तावज्जीवितभूतेति भवतोऽप्यविवादः। यथोक्तं त्वयैव–

"काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्" इति।

तद्वस्त्वलंकारध्वन्यभिप्रायेणांशमात्रत्वमिति सिद्धसाधनम्। रसध्वन्यभिप्रायेण तु

प्रसिद्धेः प्रदर्शितेत्युक्तम्। अपूर्वसमाख्यामात्रकरणे **तृतीयाभाववादे हि तेषामन्यतमस्यैव वा समाख्यामात्रकरणे यत्किञ्चन कथितं स्यादित्युक्तम्॥**

वाग्विषयस्थितिप्रतिपादकस्य लक्षयतां- पदस्य निरुक्तिपूर्वकं व्याख्यानं करोति– **लक्ष्यतेऽनेनेति।**

सहृदयशब्दं व्याचष्टे। **येषामित्यादि**–"योऽर्थ" इत्यादि। सः **हृदयसंवादी** हृदये तन्मयीभवनशीलः। **ध्वनिर्नामेत्यादि।** व्यापारः रसचर्वणात्मा। भेदे भोगात्मनो व्यापारादित्यर्थात् **काव्ये अंशत्वं, न रूपतेति** नांऽशित्वमित्यर्थः॥ **तदिति।**

तद्ध्वनेः रसचर्वणात्मनः काव्यात्मतया अंशित्वेन स्थितस्य कथितमंशत्वं विरुद्धं स्यादित्यर्थः। **तद्वस्त्वलङ्कारेत्यादि।** तदंशत्वं वस्तुध्वनेरलङ्कारध्वनेश्च कथ्यमानं सिद्धसाधनं रसध्वनेरुच्यमानं स्वमतविरुद्धमित्यर्थः।

[1]क.ख.ङ.च.(नि) व्यतिरिक्त. [2]क.ख.ग.(नि) लक्ष्यो. [3]क.ख.ग.(नि) लक्ष्येण. [4]क.ख.ग.ङ.(नि) (का) आत्मत्वमिति.

स्वाभ्युपगमप्रसिद्धसंवेदनविरुद्धमिति॥

तत्र कवेस्तावत्कीर्त्यापि प्रीतिरेव सम्पाद्या। यदाह—"कीर्तिं स्वर्गफलामाहुः" —इत्यादि। श्रोतॄणां च व्युत्पत्तिप्रीती यद्यपि स्तः, यथोक्तम्—

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥" इति।

तथापि तत्र प्रीतिरेव प्रधानम्। अन्यथा प्रभुसंमितेभ्यो वेदादिभ्यो मित्रसंमितेभ्यश्चेतिहासादिभ्यो व्युत्पत्तिहेतुभ्यः कोऽस्य काव्यरूपस्य व्युत्पत्तिहेतोर्जायासंमितत्वलक्षणो विशेष इति प्राधान्येनानन्द एवोक्तः। चतुर्वर्गव्युत्पत्तेरपि चानन्द एव पार्यन्तिकं मुख्यं फलम्। **आनन्द** इति च ग्रन्थकृतो नाम। तेन स आनन्दवर्धनाचार्यः एतच्छास्त्रद्वारेण सहृदयहृदयेषु प्रतिष्ठां देवतायतनादिवदनश्वरीं स्थितिं **लभताम्** गच्छत्विति भावः। यथोक्तम्—

"उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः॥" इति।

तथा—**मनसि प्रतिष्ठामिति॥** एवंविधमस्य मनः। सहृदयचक्रवर्ती खल्वयं ग्रन्थकृदिति यावत्। यथा—

"युद्धे प्रतिष्ठा परमार्जुनस्य" इति।

**स्वाभ्युपगमप्रसिद्धसंवेदनविरुद्धमिति।** तथा च भट्टनायकमतम्। काव्ये दोषाभावगुणालङ्कारमयत्वलक्षणेन नाट्ये चतुर्विधाभिनयरूपेण निबिडनिजमोहसङ्कटतानिवारणकारिणा विभावादिसाधारणीकरणात्मनाभिधातो द्वितीयेनांशेन भावकत्वव्यापारेण भाव्यमानो रसोऽनुभवस्मृत्यादिविलक्षणेन रजस्तमोऽनुवेधवैचित्र्यबलात् द्रुतिविस्तारविकासलक्षणेन सत्त्वोद्रेकप्रकाशानन्दमयनिजसंविद्विश्रान्तिलक्षणेन परब्रह्मास्वादसविधेन भोगेन भुज्यत इति परब्रह्मास्वादकल्पतया परिपूर्णस्य रसास्वादस्य कथमंशत्वमिति विरोधः॥ **तत्र कवेस्तावदित्यादि**

कीर्तौ सत्यां कवेस्तावदानन्दफलम्, श्रोतुश्च व्युत्पत्तौ सत्यामन्ततो गत्वा आनन्द एव फलमित्यर्थः॥

**आनन्द इति ग्रन्थकृतो नामेति॥** एकदेशलक्षणयेति शेषः॥

**अनश्वरीं स्थितिं गच्छत्विति भाव इति।** गच्छत्विति प्रार्थनायां लोट्। स्थितिं बहुमानात्मिकाम्। प्रार्थिता स्थितिरवश्यंभाविनीति अभिप्रायेणाह— **यथा मनसीति॥** यथा सहृदयमनसि प्रतिष्ठा स्थिरस्थितिर्भवेत्, तथाविधमस्याचार्यस्य **मनः** वैदुष्यातिशयः इत्यर्थः।

वैदुष्यमेव प्रकटयति-- **सहृदयेत्यादि।** संवादयति-- **युद्ध इति॥ प्रतिष्ठा** बहुमानमयी स्थितिः

स्वनामप्रकटीकरणं श्रोतॄणां प्रवृत्त्यङ्गमेव सम्भावनाप्रत्ययोत्पादनमुखेनेति ग्रन्थान्ते वक्ष्यामः। एवं ग्रन्थकृतः कवेः श्रोतुश्च मुख्यं प्रयोजनमुक्तम्॥

**तत्रेति॥** एवंभूतेऽभिधेये प्रयोजने च स्थिते इत्यर्थः। ननु 'ध्वनिस्वरूपं ब्रूमः' इति प्रतिज्ञाय वाच्यप्रतीयमानाख्यौ द्वौ भेदावर्थस्येति व्याख्याभिधाने का संगतिः कारिकाया इत्याशङ्क्य संगतिं कर्तुमवतरणिकां करोति– **ध्वनेरेवेत्यादिना॥** भूमिरिव[1] भूमिका। यथा अपूर्वनिर्माणे चिकीर्षिते पूर्वं भूमिरेव विरच्यते तथा ध्वनिस्वरूपे प्रतीयमानाख्ये निरूपयितव्ये निर्विवादसिद्धवाच्याभिधानं भूमिः, तत्पृष्ठोऽस्थितप्रतीयमानांशोल्लिङ्गनात्। वाच्येन समशीर्षिकागणनं तस्याप्यनपह्नवनीयत्वं प्रतिपादयितुम् । स्मृतावित्यनेन 'यः समाम्नातपूर्वः, इति द्रढयति। 'शब्दार्थशरीरं काव्यम्' इति यदुक्तं तत्र शरीरग्रहणादेव केनचिदात्मना तदनुप्राणकेन भाव्यमेव। तत्र शब्दस्तावच्छरीरभाग एव संनिविशते, सर्वजनसंवेद्यधर्मत्वात् स्थूलकृशादिवत् । अर्थः पुनः सकलजनसंवेद्यो न भवति। न ह्यर्थमात्रेण काव्यव्यपदेशः, लौकिकवैदिकवाक्येषु तदभावात् ।

I.2 तदाह– **सहृदयश्लाघ्य इति॥** स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्या विभज्यते। तथा हि– तुल्येऽर्थरूपत्वे किमिति कस्मैचित् सहृदयाः श्लाघन्ते। तद्भवितव्यं तत्र केनचिद्विशेषेण। यो विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते। वाच्यसंवलनाविमोहितहृदयैस्तु तत्पृथग्भावे विप्रतिपद्यते चार्वाकैरिवात्म-पृथग्भावे। अत एवार्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधायापोद्धारदृशा तस्य द्वौ भेदावंशावित्युक्तम्, न तु द्वावप्यात्मानौ काव्यस्येति। कारिकागतं काव्यशब्दं व्याकर्तुमाह– **काव्यस्य हीति॥** ललितशब्देन गुणालङ्कारानु-ग्रहमाह। उचितशब्देन रसविषयमेवौचित्यं भवतीति दर्शयन् रसध्वनेः जीवितत्वं सूचयति। तदभावे हि किमपेक्षयेदमौचित्यं नाम सर्वत्रोद्घोष्यत इति भावः। योऽर्थ इति यदा अनुवदन्

**ग्रन्थकृतः** लक्षणग्रन्थकृतः, **अवतरणिकां** पीठिकां भूमिकामित्यर्थः। **भूमिरिव भूमिकेति** इवार्थे कः। **निर्विवादसिद्धवाच्याभिधानं भूमिरिति।** अत्र हेतुमाह– **तत्पृष्ठोत्थितप्रतीयमानांशोल्लिङ्गनादिति।** किञ्च वाच्यप्रतीयमानाख्याविति समतया परिगणने प्रयोजनान्तरमप्यस्तीत्याह– **वाच्येनेत्यादि॥**

**शब्दार्थशरीरं काव्यमिति यदुक्तमिति।** अभाववादिनेत्यर्थात् सिद्ध्यति। **अर्थः पुनरिति।** सहृदयव्यतिरेकेण व्युत्पन्नमात्रनिखिलजनसंवेद्यः सामान्यरूपो नाऽर्थः काव्ये इत्यर्थः।

तत्र व्यतिरेकिणं हेतुमाह– **न ह्यर्थेत्यादि। वाच्यसंवलनेति।** वाच्ये नित्यसाहचर्यं **विशेषणद्वारा हेतुमिति** सहृदयश्लाघ्यत्वं काव्यार्थस्यार्थमिति स्वरूपसाधको हेतुः। **अपोद्धारदृशा** विभागदृशा, यदा

[1] क.ख.घ.ङ.(नि) एव.

परेणाप्येतत्तावदुपगतमिति दर्शयति। तस्येत्यादिना तदभ्युपगम एव द्व्यंशत्वे सत्युपपद्यत इति दर्शयति। तेन यदुक्तम्—'चारुत्वहेतुत्वात् गुणालङ्कारव्यतिरिक्तो न ध्वनिः' इति, तत्र ध्वनेरात्मरूपत्वाद्धेतुरसिद्ध इति दर्शितम्। न ह्यात्मा चारुत्वहेतुः देहस्येति भवति। अथाप्येवं स्यात्, तथापि वाच्येनानैकान्तिको हेतुः, न ह्यलङ्कार्य एवालङ्कारः, गुणी वा गुण एतदर्थमपि वाच्यांशोपक्षेपः। अत एव वक्ष्यति "वाच्यः प्रसिद्धः" इति॥

I.3 **तत्रेति॥** द्व्यंशकत्वे[1] सत्यपीत्यर्थः॥ **प्रसिद्ध इति॥** वनितावदनोद्यानेन्दूदयादिवल्लौकिक एवेत्यर्थः। उपमादिभिः प्रकारैः स व्याकृतो बहुधा इति सङ्गतिः। अन्यैरिति कारिकाभागं काव्येत्यादिना व्याचष्टे। "ततो नेह प्रतन्यते" इति विशेषप्रतिषेधेन शेषाभ्यनुज्ञा इति दर्शयति— **केवलमित्यादिना॥**

I.4 **पुनः**शब्दो वाच्यांशाद्विशेषद्योतकः॥ **अन्यदेव वस्त्विति॥** तद्व्यतिरिक्तं सारभूतं चेत्यर्थः। महाकवीनामिति बहुवचनमशेषविषयव्यापकत्वमाह। एतदभिधास्यमानप्रतीयमानानुप्राणितकाव्यनिर्माणनिपुणप्रतिभाभाजनत्वेनैव महाकविव्यपदेशो भवतीति भावः। यदेवंविधमस्ति तद्भाति; न ह्यत्यन्तासतो भानमुपपन्नम्; रजताद्यपि नात्यन्तमसद्भाति; अनेन सत्त्वप्रयुक्तं तावद्भानमिति भानात् सत्त्वमवगम्यते; तेन यद्भाति तदस्ति तथेत्युक्तं भवति। तेनायं प्रयोगार्थः[2]— प्रसिद्धं वाच्यं धर्मि प्रतीयमानेन व्यतिरिक्तेन तद्वत्, तथा भासमानत्वात्, लावण्योपेताङ्गनाङ्गवत्। प्रसिद्धशब्दस्य सर्वप्रतीतत्वमलङ्कृतत्वं चार्थः। यत्तदिति सर्वनामसमुदायः चमत्कारसारताप्रकटीकरणार्थमभ[3]व्यपदेश्यताम् अन्योन्यसंवलनाकृतं चाव्यतिरेकभ्रमं दृष्टान्तदार्ष्टान्तिकयोर्दर्शयति। एतच्च किमपीत्यनेन व्याचष्टे। लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं धर्मान्तरमेव; न चावयवानामेव निर्दोषता वा भूषणयोगो वा लावण्यम्। पृथक्पृथङ्निर्वण्य-

यच्छब्देनानुवाद इति यावत्। तदभ्युपगम एवेति तस्यार्थश्लाघ्यत्वस्याभ्युपगमः।

**द्व्यंशत्वे सतीति॥** सहृदयश्लाघ्योऽर्थ इत्युक्ते— 'संभवे व्यभिचारे च स्याद्विशेषणमर्थवत्' इति न्यायेन सहृदयश्लाघ्योऽपि कश्चिदर्थोऽस्ति इति द्व्यंशत्वमर्थस्य सिद्धमित्यर्थः।

**तेन यदुक्तमित्यादि॥** ध्वनिर्न गुणालङ्कारव्यतिरिक्तः। चारुत्वहेतुत्वात्, उपमावदित्यनैकान्तिकः। एतदर्थमपि वाच्यांशोपक्षेप इति। न केवलं ध्वनेर्भूमिकार्थमेव वाच्यांशोपक्षेपः। किं तर्हि, ध्वन्यात्मनः शरीरभूतशब्दार्थचारुत्वहेतुभ्यो गुणालङ्कारेभ्यो व्यतिरेकं द्योतयितुमपीत्यर्थः।

अथ 'प्रतीयमानमि'त्यादिकां टीकां व्याचष्टे— **पुनः शब्देनेत्यादि— एतदभिधास्यतेत्यादि।** एतेन वक्ष्यमाणप्रतीयमानेन **अनुप्राणितं** प्रोज्जीवितमिति यावत्.

**प्रयोगार्थ इति॥** अनुमानमिति यावत्। **प्रसिद्धमित्यादि।** प्रसिद्धं वाच्यं व्यतिरिक्तप्रतीय-

1 क.ख.ग.ङ.च.(नि) (का) द्व्यंशत्वे. 2(कौ) प्रयोगः. 3क.ख.ग.(नि) (का) व्यपदेश्यत्वम्.

मानकाणादिदोषशून्यशरीरावयवयोगिन्यामलङ्कृतायामपि 'लावण्यशून्येयम्' इति, अतथाभूतायामपि कस्यांचित् 'लावण्यामृतचन्द्रिकेयम्' इति च सहृदयानां व्यवहारात्। ननु लावण्यं तावत् व्यतिरिक्तं प्रथितम्; प्रतीयमानं किं तदित्येव न जानीमः। दूरे व्यतिरेकप्रथेति तथा भासमानत्वमसिद्धो हेतुः इत्याशङ्क्य "स ह्यर्थः" इत्यादिना स्वरूपं तस्याभिधत्ते। सर्वेष्वेवेत्यादिना च व्यतिरेकप्रथां साधयति। तत्र प्रतीयमानस्य तावत् द्वौ भेदौ, लौकिकः काव्यव्यापारगोचरश्च। लौकिको यः स्वशब्दवाच्यतां कदाचिदध्यशेत, स च विधिनिषेधाद्यनेकप्रकारो वस्तुशब्देनोच्यते। सोऽपि द्विविधः; यः पूर्वं क्वापि वाक्यार्थेऽलङ्कारभावमुपमादिरूपतयान्वभूत्, इदानीं तु अनलङ्काररूप एवान्यत्र **गुणीभावाच्चाभावात्, स पूर्वप्रत्यभिज्ञानबलात् अलङ्कारध्वनिरिति व्यपदिश्यते ब्राह्मण-श्रमणन्यायेन; द्वितीयस्तु तद्रूपताभावेन तूपलक्षितं वस्तुमात्रमुच्यते;मात्रग्रहणेन हि रूपान्तरं** निराकृतम्। यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो न लौकिकव्यवहारपतितः किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुराग-सुकुमारस्वसंविदानन्दचर्वणाव्यापाररसनीयरूपो रसः, स काव्यव्यापारैकगोचरो रसध्वनिरिति; स च ध्वनिरेवेति, स एव मुख्यतयात्मेति॥

यदूचे[1] भट्टनायकेन– "अंशत्वं न रूपता" इति तत् वस्त्वलङ्कारध्वन्योरेव यदि नामोपालम्भः, रसध्वनिस्तु तेनैवात्मतयाङ्गीकृतः, रसचर्वणात्मनः तृतीयस्यांशस्याभिधा-भावनांशद्वयोत्तीर्णत्वेन निर्णयात्। वस्त्वलंकारध्वन्योः रसध्वनिपर्यन्तत्वमेवेति वयमेव

मानयुक्तं, तथा भासमानत्वादिति यावत्। लावण्यस्यावयवव्यतिरिक्तत्वे अन्वयव्यतिरेकौ प्रदर्शयति– **न चेत्यादिना।**

**अतथाभूतायामपि** अनलङ्कृतायामपि। अथ दृष्टान्तवैषम्येन हेतोरसिद्धताशङ्कामवतारयि-तुमाह– **ननु चेत्यादि–**॥ **व्यतिरेकप्रथां** व्यतिरेकप्रतीतिं **अध्यशेतेति** भूतप्रत्ययनिर्देशः। पूर्वं लोक एव दृष्टोऽयमर्थ इति लौकिकत्वं प्रकटयितुं, **अन्यत्र गुणीभावाच्चाभावादिति।** अन्यमर्थं वाच्यं प्रति-अप्रधानत्वाभावादित्यर्थः॥

अतद्रूपताभावेनानलङ्कारतया **शब्दसमर्प्यमाणेत्यादि**ना वाच्यत्वमलौकिकत्वं च रसस्य समर्थयति। **यदूचे इत्यादि॥**

भट्टनायको हि 'तस्य सिद्धेऽपि भेदे स्यात्काव्येंशत्वं न रूपते'त्यवोचत्। तद्वस्त्वलङ्कारध्वनि-विषयमेवावतिष्ठते, न रसध्वनिविषयमित्यर्थः। **यदि नामोपालम्भ इति।** यदि नाम तादृशांशनिरूपणेन ध्वन्युपालम्भोऽभिमतः तर्हीत्यर्थः। अन्यथा स्वसिद्धान्तविरोध एवेत्याह– **रसध्वनिस्त्वित्यादि।**

[1] (कौ) यच्चोच्यते, घ. यत्तूचे.

वक्ष्यामस्तत्र तत्र इत्यास्तां तावत् । 'वाच्यसामर्थ्याक्षिप्तम्' इति भेदत्रयव्यापकं सामान्यलक्षणम्। यद्यपि हि ध्वननं शब्दस्यैव व्यापारः, तथाप्यर्थसामर्थ्यस्य सहकारिणः सर्वत्रानपायात् वाच्यसामर्थ्याक्षिप्तत्वम्। शब्दशक्तिमूलानुरणनरूपव्यङ्ग्येऽप्यर्थसामर्थ्यादेव प्रतीयमानावगतिः, शब्दशक्तिः केवलमवान्तरसहकारिणीति वक्ष्यामः।। **दूरं विभेदवानिति।।** विधिनिषेधौ विरुद्धाविति न कस्यापि[1] विमतिः। एतदर्थं प्रथमं तावेवोदाहरति— **भम धम्मिअ इति।।**

"भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य[2] मारितस्तेन।
गोदावरीनदीकूललतागहनवासिना दृप्तसिंहेन ।।"

कस्याश्चित् सङ्केतस्थानं जीवितसर्वस्वायमानं धार्मिकसंचरणान्तरायदोषात्तदवलुप्यमान-पल्लवकुसुमादिविच्छायीकरणाच्च परित्रातुमियमुक्तिः। तत्र स्वतस्सिद्धमपि भ्रमणं श्वभयेनापोदितमिति प्रतिप्रसवात्मको निषेधाभावरूपः न तु नियोगः प्रैषादिरूपः अत्र विधिः; अतिसर्गप्राप्तकालयोर्हि अयं लोट्; तत्र भावतदभावयोर्विरोधात् द्वयोरतावन्न युगपद्वाच्यता ; न क्रमेण, विरम्यव्यापाराभावात्, "विशेष्यं नाभिधा गच्छेत्" इत्यादिनाभिधाव्यापारस्य विरम्यासंभवाभिधानात्। ननु तात्पर्यशक्तिरपर्यवसिता विवक्षया

**यद्यपीत्यादि।** शब्दस्य व्यञ्जकत्वेऽप्यर्थसामर्थ्यं सहकारि भवति। ततोऽर्थसामर्थ्याक्षिप्तं प्रतीयमानमिति वक्तुं शक्यत इति भावः।

अत्र वाच्याद्भेदः ध्वनित्रयस्य साध्यः। तत्र वस्तुध्वनेः वाच्यात् भेदमुदाहरणैरेव दर्शयति-- **तत्र स्वतःसिद्धमपीत्यादि। अपोदितं** प्रतिषिद्धं, **प्रतिप्रसवात्मको निषेधाभावरूपो**ऽत्र विधिरिति संबन्धः। **न तु नियोगः प्रैषादिरूप** इति व्यावर्त्यम्। तत्र हेतुः—**अतिसर्गप्राप्तकालयोर्ह्ययं लोडिति।**

अयमर्थः— स्वतःसिद्धं भ्रमणम्, पूर्वः श्वभीतिनिषेध इति यः, इदानीं तु प्रतिषिद्धस्य भ्रमणस्य प्रतिषेधकोऽभावः कथ्यते सोऽयं प्रतिप्रसवः। प्रतिषेधनिवर्तनं हि सः। प्राप्ते तु प्रतिषेधेऽत्र प्रतिप्रसवयोगितेत्युक्तेः। अतो भ्रमणस्येदानीं न कश्चित् प्रतिबन्ध इति निषेधाभावरूपोऽत्र विधिः। न तु नियोगः। न खल्वेषा स्वैरिणी राजवत् भ्रमणविधिं करोति। श्वभयमिव निषेधं वा, किं तर्हि, भ्रमणप्रतिषेधकाभावकथनं करोति। ततो बलात् भ्रमणं विधीयमानताकोटिं निविशते। अतोऽयं लोडतिसर्गे प्राप्तकाले वा। भवति चैष नियोगप्राय इति। अथ उदाहरणार्थनिरूपणद्वारा काव्ये वाक्यार्थपर्यालोचनाप्रधानं प्रकाशयति— **तत्र भावतदभावयोरित्यादिग्रन्थेन।** तत्र प्रथममभिमतमर्थं प्रस्तौति। **द्वयोस्तावन्न युगपद्वाच्यतेति।** द्वयोर्विधिनिषेधयोः प्रकृते ह्युदाहरणे भ्रमणविधिश्च भ्रमण-निषेधश्च द्वावप्यर्थौ प्रतिभासेते। तयोर्युगपद्वाच्यता न घटते। एकत्वेन विरुद्धाकारद्वयाभावप्रसंगात्। न च क्रमेणाभिधेयता। अभिधाया विरम्य पुनः संभवाभावात् इति। अत्र अभिधान्वयं वादपूर्वपक्षतया परिमृशति— **ननु तात्पर्येति।** तात्पर्यशक्तिर्वाक्यार्थीभूतनिषेधप्रतीतिं करोतीति संबन्धः। **अपर्यवसिता** विधौ पर्यवसानमनाप्नुवती। **विवक्षया** निषेधस्यैव विवक्षितत्वात् समर्थं प्रतिपादयितुं वाक्यं

[1]क.ख.ङ च (नि) (का) कस्यचिदपि. [2]क.ख.घ.ङ.च. श्वाद्य.

दृप्तधार्मिकतदादिपदार्थानन्वयरूपमुख्यार्थबाधकबलेन विरोधनिमित्तया विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः, एवमनेनोक्तमिति हि व्यवहारः; तन्न वाच्यातिरिक्तोऽन्योऽर्थ इति॥

नैतत्; त्रयो ह्यत्र व्यापाराः संवेद्यन्ते—पदार्थेषु सामान्यात्मस्वभिधाव्यापारः, समयापेक्षयार्था[1]वगमनशक्तिर्ह्यभिधा। समयश्च[2] तावत्येव, न विशेषांशे, आनन्त्याद्व्यभिचाराच्चैकस्य। ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते, 'सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि' इति न्यायात्। तत्र च द्वितीयकक्ष्यायां भ्रमेति विध्यतिरिक्तं न किञ्चित्प्रतीयते, अन्वयमात्रस्यैव प्रतिपन्नत्वात्। न हि 'गङ्गायां घोषः' 'सिंहो वटुः' इत्यत्र यथान्वय एव बुभूषन् प्रतिहन्यते, योग्यताविरहात्, तथा तव भ्रमणनिषेद्धा स श्वा सिंहेन हतः। तदिदानीं भ्रमणनिषेधकारणवैकल्याद्भ्रमणं तत्रोचितमित्यन्वयस्य [3]काचित्क्षतिः। अत एव मुख्यार्थबाधा नात्र शङ्क्येति न विपरीतलक्षणाया अवसरः।

उपादीयते। तस्मिन् कथमविवक्षा। न स्यादिति भावः। **दृप्तधार्मिकेत्यादि।**
मा भ्रमेति वक्तव्ये भ्रमेत्युक्तं विरुद्धलक्षणयेत्यप्रतिपन्नम्। तत्र श्रुतानां पदार्थानां नान्वयः, विरोधात्। ततोऽनन्वयरूपो मुख्यार्थबाधः। तद्बलेनोत्थापितविरुद्धलक्षणया तात्पर्यशक्तिर्निषेधप्रतीतिं करोतीति। अतः शब्दशक्तिमूलत्वात् वाच्य एव निषेधार्थ इति। **अभिहितान्वयदृशा** अभिहितान्वयवादिमतेन। अभिहितान्वयवादी ह्येवं ब्रूयात्— व्यञ्जनव्यापारविमुखा तात्पर्यशक्तिरेवात्र लक्षणास्पर्शेन निषेधं प्रतिपादयति इति। तदेतत् प्रत्याचष्टे। **नैतदित्यादि। त्रय इति॥** अभिधा तात्पर्यं लक्षणा चेति। **आनन्त्यादिति।**—विशेषसमयश्चेत् विशेषाणामनन्त्यत्वात् समयानन्त्येन न व्युत्पत्तिसंभवः इति **व्यभिचाराच्चैकस्येति**— एकस्य विशेषस्येत्यर्थः विशेषान्ताभिधाने पूर्वविशेषस्य अभिधानात् व्यभिचारात् स्वार्थविच्छित्तिप्रसंगश्चेत्यर्थः। विशेषरूपो वाक्यार्थ इत्यत्र हेतुमाह— **परस्परेत्यादि।** अन्यथा विशेषानवगमने असिद्धे स्वकीयान्वयो न सिद्ध्यतीति। **द्वितीयकक्ष्यायामिति॥**

अभिधात्वविषयसामान्यभूतपदार्थपुञ्जभागः प्रथमकक्ष्या। तात्पर्यव्यापारविषयविशेषभूतैकात्मकवाक्यार्थभागो द्वितीयकक्ष्या। **विध्यतिरिक्तं न किञ्चिदिति** विधिरेव प्रतीयते, न तु तदतिरिक्तस्तद्बाध इत्यर्थः। तत्र हेतुः— **अन्वयमात्रस्यैव प्रतिपन्नत्वादिति।**

आकांक्षासन्निधियोग्यतावशात् पदार्थानामन्योन्यं संसर्ग एव प्रतीयत इति यदि विरोधस्तर्हि अन्वयो न भवतीति वैधर्म्योदाहरणं दर्शयति— **न हि गङ्गायामित्यादि।** बुभूषन्–भवितुमुद्यतः। **तवेति**

[1]क.ख.ग.घ.ङ.च.(नि) **समयापेक्षार्था.** [2](कौ) **संकेतश्च.** [3]क.ख.ग.ङ.च.(नि) **न काचित्.**

भवतु वासौ। तथापि द्वितीयस्थानसंक्रान्ता तावदसौ न भवति। तथा हि-- मुख्यार्थबाधायां लक्षणायाः प्रवलृप्तिः। बाधा च विरोधप्रतीतिरेव। न चात्र पदार्थानां स्वात्मनि विरोधः। परस्परं विरोध इति चेत्-- सोऽयं तर्ह्यन्वये विरोधः प्रत्येयः। न चाप्रतिपन्नेऽन्वये विरोधप्रतीतिः, प्रतिपत्तिश्चान्वयस्य नाभिधाशक्त्या, तस्याः पदार्थ-प्रतिपत्त्युपक्षीणाया विरम्याव्यापारात् इति तात्पर्यशक्त्यैवान्वयप्रतिपत्तिः।

नन्वेवं 'अङ्गुल्यग्रे करिवरशतम्' इत्यत्राप्यन्वयप्रतीतिः स्यात्। किं न भवत्यन्वयप्रतीतिः दशदाडिमादिवाक्यवत्? किन्तु प्रमाणान्तरेण सोऽन्वयः प्रत्यक्षादिना बाधितः प्रतिपन्नोऽपि शुक्तिकायां रजतमिवेति तदवगमकारिणो वाक्यस्याप्रामाण्यम्। 'सिंहो माणवकः' इत्यत्र तु द्वितीयकक्ष्यानिविष्टतात्पर्यशक्तिसमर्पितान्वयबाधकसमुल्लासानन्तरमभिधातात्पर्य-शक्तिद्वयातिरिक्ता तावत् तृतीयाशक्तिः तद्बाधकविधुरीकरणनिपुणा लक्षणाभिधाना समुल्लसति। नन्वेवं 'सिंहो वटुः' इत्यत्रापि काव्यरूपता स्यात्, ध्वननलक्षणस्यात्मनोऽत्रापि समनन्तरमेव वक्ष्यमाणतया भावात्। ननु घटेऽपि जीवव्यवहारः स्यात्, आत्मनो विभुत्वेन

---

---

धार्मिकापेक्ष्या अभ्युपगम्यापि ब्रूते। **भवतु वाऽसाविति।** असौ विपरीतलक्षणा। **तथापीत्यादि**-- तात्पर्यव्यापारविषयो द्वितीयकक्ष्या। यत्र द्वितीयस्थानम् तत्र न लक्षणायाः संक्रमणम्। एतदेव समर्थयति-- **तथा हीत्यादि**--

**स्वात्मनीति।** न खलु धार्मिकार्थस्य स्वेन विरोधः। न च दृप्तस्य स्वेनेत्यादि। **परस्परमिति** परस्परमन्वय इत्यर्थः। अत एवाह **सोऽयं तर्ह्यन्वये विरोधः प्रत्येय इति। न चेत्यादि। अप्रतिपन्ने** अगृहीते। तस्मात् विरोधप्रतीत्युपगमात् अन्वयप्रतिपत्तिरङ्गीकृतैव तावदित्यर्थः।

सा चान्वयप्रतिपत्तिः केन व्यापारेणेति चिन्त्यम्। न तावदभिधयेत्याह--**प्रतिपत्तिश्चेत्यादि। तात्पर्यशक्त्यैवेति**-- लक्षणयेति तु नाऽशङ्कनीयमेव। तस्या निषेधप्रतिपादकत्वाभिमानादित्यर्थः। अथाऽशङ्कते-- **नन्वेवमिति।** एवं विरोधात् प्रागेवान्वयप्रतिपत्तिश्चेत् इति यावत्।

परिहरति।। **किं नेत्यादि।।** अत्रेत्यर्थात् सिद्धं भवत्येवान्वयप्रतीतिः। **यथा** दश दाडिमादावित्यर्थः। विशेषमाह-- **किन्त्वित्यादि**-- प्रतिपन्नोऽपि **सोऽन्वयः बाधित** इति संबन्धः। दृष्टान्तमाह-- **शुक्तिकायां रजतमिवेति।** फलितार्थमाह-- **तदवगमेति।** एवं प्रकृते वाक्ये द्वितीयकक्ष्यायां न लक्षणा। तृतीयकक्ष्यायामेव स्यात्, यदि स्यादिति स्थितम्। एवमेव गौणलक्षणायामिति दर्शयति-- **सिंह इत्यादि।।**

**तद्बाधकविधुरीकरणनिपुणेति।** तद्बाधकस्य अन्वयबाधकस्य विधुरीकरणे बाधने शक्ता इत्यर्थः। लक्षणा हि तात्पर्यसमर्पिता तस्यान्वयस्य यो बाधको विरोधात्मकस्तं पराणुद्य प्रकारान्तरेणान्व-यमापादयति। अत्र 'किन्त्विति' प्रसङ्गमाशङ्कते। **ननु सिंह इत्यादि-- समनन्तरमेव वक्ष्यमाणतयेति।** समनन्तरमेव नियतसन्निधौ लक्षणेत्यादिना पवित्रत्वादिकं पराक्रमातिशयादिकं च लक्षणायाः

तत्रापि भावात् । शरीरस्य खलु विशिष्टाधिष्ठानयुक्तस्य सत्यात्मनि जीवव्यवहारः, नेतरत्र— इति चेत्, तर्हि गुणालङ्कारौचित्यसुन्दरशब्दार्थशरीरस्य सति ध्वननाख्यात्मनि काव्यरूपताव्यवहारः, न चात्मनोऽसारता काचिदिति समानम्॥

न चैवं भक्तिरेव ध्वनिः। भक्तिर्हि लक्षणाव्यापारः तृतीयकक्ष्यानिवेशी, चतुर्थ्यां तु कक्ष्यायां ध्वननव्यापारः। तथा हि— [1]त्रयसन्निधौ लक्षणा प्रवर्तत इति तावत् भवतां[2] मतम्। तत्र मुख्यार्थबाधा तावत् प्रत्यक्षादिप्रमाणान्तरमूला। निमित्तं च यदभिधीयते सामीप्यादि, तदपि प्रमाणान्तराव[3]गम्यमेव। यत्तु इदं घोषस्य अतिपवित्रत्वशीतलत्वसेव्यत्वादिकं प्रयोजनमशब्दवाच्यं प्रमाणान्तराप्रतिपन्नं वटौ वा पराक्रमातिशयशालित्वं तत्र शब्दस्य न तावन्न व्यापारः। तथा हि— तत्सामीप्यात् तद्धर्मत्वानुमानमनैकान्तिकम्, सिंहशब्दवाच्यत्वं च वटोः असिद्धम्। अथ यत्र यत्र एवंशब्दप्रयोगः तत्र तत्र तद्धर्मयोगः इत्यनुमानम्, तस्यापि व्याप्तिग्रहणकाले मौलिकं प्रमाणान्तरं वाच्यम्; न चास्ति; न च स्मृतिरियम्, अननुभूते[4] तदयोगात्, नियमाप्रतिपत्तेः वक्तुरेतदेव विवक्षित-

प्रयोजनत्वेनोच्यते। तत्र व्यापारो व्यञ्जनात्मक इति च। ततो हेतोः ध्वननसद्भावादित्यर्थः। एतत् प्रतिबन्द्या परिहरति—**घटेऽपीत्यादि।** पराभिप्रेतं हेतुमाशङ्कते **शरीरस्येति।**

तर्हि समः समाधिरित्याह— **तर्हि गुणालङ्कारेत्यादि॥** असाधारणताविशेष इत्यर्थः। तस्मात् तृतीयकक्ष्यापातिन्येव लक्षणेति स्थितम्। ननु एवमस्तु लक्षणा। तदिह निषेधो लक्ष्योऽस्तु, मा भूदभिधेयः; मा च भूद्व्यङ्ग्यध्वननं च। लक्षणैवास्तु। प्रयोजनप्रयोजनाव्यभिचाराल्लक्षणायाः प्रयोजनं, न ध्वननात्मकत्वादित्याशंकाऽवष्टंभेनाह— **न चैवमित्यादि।** कक्ष्याभेदाल्लक्षणाध्वननयोर्भेद इत्यर्थः।

उक्तं समर्थयति। **तथा हीत्यादि।** भवतां, प्रयोजनं पुनः शब्दप्रमाणगम्यमित्यर्थः। अनुमानगम्यत्वाशङ्कायां परिहारमाह— **तत्सामीप्यादिति॥**

घोषोऽतिपवित्रः, गङ्गासमीपत्वात्, तटस्थितमण्डूकशाबवदिति। विपक्षेऽपि वृत्तेरनैकान्तिकत्वम्। वटुः शूरः सिंहशब्दवाच्यत्वादिति अनुमानमपि न भवति। हेतोरसिद्धत्वादिति। **अथेत्यादि।** एवं शब्दप्रयोगः गङ्गायां घोषः सिंहो वटुरित्येवंप्रकार इत्यर्थः। तत्र प्रतियोगिन्यर्थे घोषमाणवकादौ तद्धर्मः पवित्रत्वादिः, शौर्यातिशयादिश्चास्तीत्यर्थः। **तस्यापीत्यादि—**

यत्र यत्र धूमस्तत्र तत्राग्निरिति व्याप्तिग्रहणं प्रत्यक्षमूलमुच्यते। न चैवमत्र व्याप्तिग्रहणे किंचित् प्रमाणं मूलभूतं वक्तुं लक्ष्यते इत्यर्थः। न चास्ति तदिति शेषः। तर्हि स्मरणगम्यमस्तु। प्रयोजनमत्राह— **न चेत्यादि॥** हेतुमाह—**अननुभूत** इति॥ हेत्वन्तरमप्याह— **नियमाप्रतिपत्तेरित्यादि**—कस्यचित् स्मरणं चेत्

[1]क.ख.ग.(का) त्रितय. [2]क.ख.(का) भवन्त एव वदन्ति. [3]च. ०रादव०. [4]क.ख.ग. ०तेः.

मित्यध्यवसायाभावप्रसङ्गाच्च इत्यस्ति तावदत्र शब्दस्य व्यापारः । व्यापारश्च नाभिधात्मा[1], समयाभावात्; न तात्पर्यात्मा, तस्यान्वयप्रतीतावेव परिक्षयात्; न लक्षणात्मा, उक्तादेव हेतोः स्खलद्गतित्वाभावात्। तत्रापि हि[2] स्खलद्गतित्वे पुनर्मुख्यार्थबाधा निमित्तं प्रयोजनमित्यनवस्था स्यात् । अत एव यत् केनचित् लक्षितलक्षणेति नाम कृतं तद्व्यसनमात्रम्। तस्मात् अभिधातात्पर्यलक्षणा[3]व्यतिरिक्तः चतुर्थोऽसौ व्यापारो ध्वननद्योतनव्यञ्जनप्रत्यायनावगमनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्यः। यद्वक्ष्यति--

"मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।

यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः॥" इति।

तेन समयापेक्षा [4]वाच्यार्थावगमनशक्तिः अभिधाशक्तिः; तदन्यथानुपपत्तिसहायार्थावबोधनशक्तिः तात्पर्यशक्तिः; मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिः लक्षणाशक्तिः तच्छक्तित्रयोपजनितार्थावगममूलजाततत्प्रतिभासपवित्रितप्रतिपत्तृ-

नियमभावेनैतदेव वक्त्रा विवक्षितमिति निर्धारयितुं न पार्यते। सोऽप्यत्र हेतुरित्यर्थः। तस्मात् शब्दत एव प्रयोजनं प्रतिपद्यते, यत्रास्य केनचिद्व्यापारेण भवितव्यमित्याह– **अस्ति तावदिति**– स च व्यापार अभिधातात्पर्यलक्षणाभ्यो अन्य एवेति समर्थयितुमाह– **व्यापारश्चेत्यादि।**

**उक्तादेव हेतोरिति।** मुख्यार्थबाधे प्रत्यक्षादिमूलत्वमुक्तो हेतुः। **स्खलद्गतित्वाभावादिति** मुख्यार्थबाधाभावादित्यर्थः। तटे हि लक्ष्ये गङ्गाशब्दः स्वार्थे सबाधः। नैवं पवित्रत्वे लक्ष्ये विपक्षे बाधमाह– **तत्रापि हीति॥ अनवस्थेति**-- मूलक्षतिकरीति शेषः। अनेनैव न्यायेन मतान्तरं परास्यति। अत एवेत्यादि। **लक्षितलक्षणेति।** लक्षिते लक्षणा लक्षितलक्षणा। तटे इव गङ्गाशब्दस्य प्रयोजनेऽपि लक्षणाऽस्तीत्यर्थः। **नाम कृतं** ध्वननव्यापारस्येति शेषः। **तद्व्यसनमात्रमिति।** अनर्थमात्रं न कश्चिदर्थलेशोऽपि अनवस्थापातादिति भावः। निगमयति **तस्मादिति।** तत्र प्रमाणं दर्शयति– **यद्वक्ष्यतीति।** व्यापारचतुष्टयस्य स्वरूपं विशदयति– **तेनेत्यादि। वाच्यार्थावगमनशक्तिरिति** पदार्थावगमशक्तिरिति यावत्। **तदन्यथानुपपत्तिसहायार्थावबोधनशक्तिरिति।** तस्य विशेषरूपस्यान्वितार्थस्य अन्यथा तात्पर्याभावे अभिधाया एव भावे योऽनुपपत्तिः तत्सहायो योऽर्थः संसृष्टस्तदवबोधनशक्तिरित्यर्थः। **तच्छक्तित्रयेत्यादि।** अभिधयोपजनितोऽर्थः पदार्थः। तात्पर्योपजनितो वाक्यार्थो विशेषरूपः। लक्षणयोपजनितो लक्ष्यः। एतदर्थत्रयावगमरूपं यन्मूलं तस्माज्जातेति यावत्। तथा तत्प्रतिभासेन अर्थत्रयप्रतिभासजेन पवित्रितो

[1]घ.ङ.च. नाभिधात्मा. [2]क.ख.ग.घ. 'हि' नास्ति. [3]क.ख.ग. लक्षणाव्य०. [4]क.ख.ग.ङ.च.(का) वाच्यावगम०.

प्रतिभासहायार्थद्योतनशक्तिः ध्वननव्यापारः । स च प्राग्वृत्तं व्यापारत्रयं न्यक्कुर्वन् प्रधानभूतः काव्यात्मा इत्याशयेन निषेधप्रमुखतया च, प्रयोजनविषयोऽपि निषेधविषय इत्युक्तः। अभ्युपगममात्रेण चेदमुक्तम् । न त्वत्र लक्षणा, अत्यन्ततिरस्कृतत्वान्य-संक्रमणयोरभावात्। न [1]चार्थशक्तिमूलेऽस्या व्यापारः। सहकारिभेदाच्च शक्तिभेदः स्पष्ट एव; यथा[2] तस्यैव शब्दस्य व्याप्तिस्मृत्यादिसहकृतस्य विवक्षावगतावनुमापकत्वव्यापारः, अक्षादिसहकृतस्य वा विकल्पकत्वव्यापारः। एवमभिहितान्वयवादिना तावदियदनपह्नवनीयम्।।

योऽप्यन्विताभिधानवादी "यत्परः शब्दः स शब्दार्थः" इति हृदये गृहीत्वा शरवदभिधाव्यापारमेव दीर्घदीर्घमिच्छति तस्य यदि दीर्घदीर्घो व्यापारः, तदेकोऽसाविति

परिशोधितो योऽयं प्रतिपत्ता तस्य या प्रतिभा तया सहितः अर्थस्य प्रयोजनादिरूपस्य द्योतन-शक्तिरित्यर्थः।

**स चेत्यादि**— व्यापारत्रयन्यक्कारात् प्रधानभूतत्वं ध्वननस्य, प्रधानत्वादेव काव्यात्मत्वं तदभिप्रायेण च। **निषेधप्रमुखतया च** निषेधाभिमुखतया च। **निषेधविषय इत्युक्त** इति भूतकालत्वं न विवक्षितम्। उच्यत इति यावत्। स हि वाच्ये विधिरूपे कदाचित् प्रतिषेधरूपो यथेति प्रतीयमानार्थ उक्तः। न खलु व्यञ्जनाव्यापारेणैवावगम्यत इति व्यञ्जनाव्यापारनिषेधविषय इत्युक्त इत्यर्थः।।

यद्यप्येवमुक्तं तथापि अत्र वस्तुतो लक्षणायाः कथैव नास्तीत्याह— **अभ्युपगमेत्यादि।** लक्षणाभावे हेतुमाह— **अत्यन्तेत्यादि।** लक्षणाया हि वाच्यस्यात्यन्ततिरस्कृतत्वं वा अर्थान्तरसंक्रमितत्वं वा नियतम्। न चैतत् किञ्चिदत्र। तस्मान्न लक्षणेति यावत्। ननु अर्थशक्तिमूलोऽयं ध्वनिः तत्र किं लक्षणा न स्यादित्याशङ्क्याह— न ह्यर्थशक्तिमूले अस्या व्यापार इति अस्या लक्षणाया अन्यथा लक्षणामूलध्वनिरिति व्यपदेशः स्यात्, नार्थशक्तिमूल इति भावः। किं च अर्थशक्तिमूलध्वननव्यापारस्य वक्तृबोद्धव्यकाक्वादिवैशिष्ट्यं सहकारि लक्षणायास्तु मुख्यार्थबाधादित्यतोऽप्यनयोर्भेदः सिद्ध इत्याह— **सहकारिभेदाच्च शक्तिभेदः स्पष्ट एवेति।** तदपि विशदयति **यथा तस्येत्यादि।** शब्दोऽनुमानमिति दर्शने यो यत्र दृश्यते शब्दः स तस्यार्थस्य वाचकः। यस्मिन् न दृश्यते वासौ न तस्यार्थस्य वाचकः, इति व्याप्ति-स्मरणम्। आदिशब्देन पक्षधर्मत्वं शब्दोऽर्थवानित्येवंरूपम्। एतत्सहकृतस्य शब्दस्य यथा विवक्षावगमे अनुमापकत्वशक्तिरित्यर्थः।

अस्य वक्तुरनेन शब्देनायमर्थो वक्तुमिष्ट इत्यवगमे खलु शब्दोऽनुमानं भवतीति दृष्टान्तान्तरं दर्शयति। **अक्षादीत्यादि**— अक्षमिन्द्रियं श्रोत्रम्, आदिशब्दाददृष्टादि। तत्सहकृतस्य शब्दस्य। विकल्पकत्वं बोधकत्वं, **अर्थप्रतिपादकत्वं** वाचकत्वमित्यर्थः।।

उपसंहरति— **एवमभिहितेत्यादि। इयदिति।** अभिधादिव्यापारत्रयोत्तीर्णध्वननव्यापार-तद्विषयवैभवमित्यर्थः। अथान्विताभिधानवादिमतेनापि न प्रतिहन्यतेऽयं ध्वनिरित्याह—**योऽप्यन्विता-भिधानेत्यादि।। शरवदिति**— यथा शरो हस्तवता मुक्तः शत्रोरुरच्छदमुरश्च भित्त्वा प्राणानपहृत्य निर्गच्छति इति दीर्घस्तद्व्यापारः, तथा शब्दोऽप्यनेकमर्थं सकृत् प्रयुक्तोऽभिधत्ते इति दीर्घोऽस्याभिधा-व्यापारः। अतो अभिधाव्यतिरेकेण न कश्चन ध्वननव्यापारो युक्तः शब्दस्य अस्त्यपूर्वः। अर्थोऽपि

[1]क.ख.ग.घ.ङ.च.(नि) (का) न हि. [2]क.ख.ग.(नि) तथा.

कुतः? भिन्नविषयत्वात्। अथानेकोऽसौ, तद्विषयसहकारिभेदात् असजातीय एव युक्तः। सजातीये च कार्ये विरम्य व्यापारः शब्दकर्मबुद्ध्यादीनां पदार्थविद्भिः निषिद्धः। असजातीये चास्मन्नय एव। अथ योऽसौ चतुर्थकक्ष्यानिविष्टोऽर्थः स एव इतीति वाक्येनाभिधीयते इत्येवंविधं दीर्घदीर्घत्वं विवक्षितम्, तर्हि तत्र संकेताकरणात् कथ साक्षात् प्रतिपत्तिः? निमित्तेषु संकेतः नैमित्तिकस्त्वसावर्थ इति संकेतानपेक्ष एवेति चेत्, पश्य श्रोत्रियस्योक्ति[1]कौशलम्! यो ह्यसौ पर्यन्तकक्ष्याभाग्यर्थः प्रथमं प्रतीतिपथमवतीर्णः तस्य पश्चात्तनाः पदार्थावगमा निमित्तभावं गच्छन्तीति नूनं मीमांसकस्य प्रपौत्रं प्रति नैमित्तिकत्वमभिमतम्। अथोच्येत— पूर्वं तत्र संकेतग्रहणसंस्कृतस्य तथा प्रतिपत्तिर्भवतीति अमुया वस्तुस्थित्या निमित्तत्वं पदार्थानाम्, तर्हि तदनुसरणोपयोगि न किञ्चिदप्युक्तं

अभिधेय एव, न व्यङ्ग्य इति पूर्वपक्षः। तं विघटयति —**तस्य यदीत्यादि।** योऽयं **दीर्घदीर्घो व्यापारः** स किमेको अनेको वा? न एकः विषयभेदेन भेदापातात्। न ह्यभिधेया अर्था अनेके, अभिधात्वेकैवेति भवति। अथानेकश्चेत् विषयभेदात् सहकारिभेदाच्च अनेकश्चासजातीयश्चैवासौ व्यापारः स्यात्। विषयो मुख्यलक्ष्यादिः। सहकारी सङ्केतः। मुख्यार्थबाधादि वक्तृबोद्धव्यादिवैशिष्ट्यं च। किं चानेकस्यास्य व्यापारस्य ये विषयाभिन्नाः ते किं सजातीया विजातीया वा इति विकल्पमभिसन्धाय, सजातीयपक्षं व्युदस्यति— **सजातीये चेत्यादि।** कार्ये विषये इत्यर्थः। **व्यापार इति।** अभिधात्मेत्यर्थः। द्वितीयं पक्षमनुमन्यते— **असजातीये चेति। अस्मन्नय एवेति।** अस्मत्पक्ष एव, कात्र विमतिरित्यर्थः। आशङ्कते— **अथ योऽसाविति।। चतुर्थकक्ष्यानिविष्ट** इति लक्षणाभिमतपक्षे इति शेषः। अभिधामूलव्यञ्जनाभिमतो **अर्थ इति।** व्यङ्ग्याभिमत इत्यर्थः। तृतीयकक्ष्याविनिविष्ट इति शेषः।। **वाक्येनाभिधायकपदसमुदायेन। स एवेति**— नान्योऽर्थः कश्चिदित्यर्थः। परिहरति— **तर्हीत्यादि।** वाक्यं चतुर्थकक्ष्याविनिविष्टमर्थं साक्षात् नाभिदध्यात्। तत्र असङ्केतितत्वात्। न खलु गङ्गाशब्दः पवित्रतायां संकेतितः। न च 'भम धम्मिअ' इत्यादिवाक्यं गोदावरीतीरे मा भ्रमेत्यर्थे संङ्केतितमित्यर्थः। आशङ्कते— **निमित्तेष्विति।** निमित्तेषु पदार्थेषु चतुर्थकक्ष्यापातिनोऽर्थस्य निमित्तभूताः पदार्थाः, तेष्वेवं सङ्केतः, **असाविति** चतुर्थकक्ष्याविनिविष्टः संकेतानपेक्ष एवेति निमित्तबलादेव सिद्धत्वादिति भावः। सोपहासं परिहरति— **पश्येत्यादि।** प्राग्भवस्य पश्चाद्भाविनिमित्तश्चेत् मीमांसकस्य तव भविष्यत्प्रपौत्रो निमित्तः स्यादित्यर्थः। आशङ्कते, **अथोच्येत** इत्यादि।

तत्र पदार्थेषु सङ्केतग्रहणसंस्कृतस्य पुरुषस्य तथा प्रतिपत्तिः। चतुर्थकक्ष्याविनिविष्टार्थप्रतिपत्तिभवतीत्यनया वस्तुस्थित्या पदार्था निमित्तं भवन्तीत्यर्थः।। परिहरति—**तर्हीति।** तदनुसरणोपयोगि चतुर्थकक्ष्याविनिविष्टार्थावगमोपयोगि **किञ्चिदपि नोक्तं स्यादिति** यावत्। गृहीतसंकेतस्य संकेतिताः पदार्थाः एव गम्येरन् नाऽगृहीतसङ्केतश्चतुर्थकक्ष्याविनिविष्टोऽर्थ इति भावः।

[1]क.ख.ग.(नि) श्रोत्रियस्यानुवाकहतबुद्धेरुक्ति०.

स्यात् । न चापि प्राक् पदार्थेषु संबन्धग्रहणं वृत्तम्, अन्वितानामेव सर्वदा प्रयोगात्। आवापोद्वापाभ्यां तथाभाव इति चेत्, संकेतः पदार्थमात्र एवेत्यभ्युपगमे पाश्चात्यैव विशेषप्रतीतिः। अथोच्यते– 'दृष्टैव झटिति तात्पर्यप्रतिपत्तिः, किमत्र कुर्म' इति; तदिदं वयमपि न नाङ्गीकुर्मः, यद्वक्ष्यति–

"तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्वार्थदर्शिन्यां झटित्येवावभासते ॥"

इति; किं तु सातिशयानुशीलनाभ्यासात्तत्र संभाव्यमानोऽपि क्रमः सजातीयतद्विकल्प-परम्परानुदयात् अभ्यस्तविषयव्याप्तिसमयस्मृतिक्रमवत् न संवेद्यते इति। निमित्त-नैमित्तिकभावश्चावश्याश्रयणीयः। अन्यथा गौणलाक्षणिकयोः मुख्याद्भेदः, श्रुतिलिङ्गा-

अगृहीतसङ्केते कथमभिधा व्याप्रियतामिति निष्कर्षः॥ एतदेव विशदीकर्तुं 'किं च भवन्मते सङ्केतग्रहणमपि न घटत' इत्याह– **न चापीति।** तत्र हेतुमाह–

**अन्वितानामेवेति।** परस्परं व्यतिषक्ता एव पदार्थाः न तु विभक्ताः पृथक् पृथग्भूताः। तत्र कथमयमियान् भागोऽस्य पदस्यार्थ इति सङ्केतो गृह्यत इत्यर्थः। आशङ्कते– **आवापेत्यादि–**

व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु ।
आवापोद्वापभेदेन पदानां शक्तिनिश्चयः॥

इति नयात्तथाभावः पृथक् पृथक् सङ्केतग्रहणमित्यर्थः। परिहरति– **सङ्केतः इति।** आवापोद्वापाभ्यां पदशक्तिनिर्णये पदार्थसामान्य एव संकेत इति स्थितिः स्यात्, न च **विशेष** इति। तदा पश्चात् प्रतीयमाने विशेषरूपे अर्थे किं संकेतग्रहणमुपकरोतीत्यर्थः॥

आशङ्कते–**अथोच्यत इति। तात्पर्यप्रतिपत्तिरि**ति। तात्पर्यस्य विशेषरूपस्य चतुर्थकक्ष्याविनिविष्टस्यार्थस्य प्रतिपत्तिरिति यावत्।

परिहरति–**तदिदमिति।** अङ्गीकारमेव प्रदर्शयति– **यद्वक्ष्यतीति।** तत्र विशेषमाह-- **किं त्वेत्यादि।** झटिति प्रतीतावपि पदार्थवाक्यार्थयोर्निमित्तनैमित्तिकभावः क्रमात्मा अवश्यमस्तीत्यंगीकर्तव्य इति युक्त्या संभाव्यमानोऽपि क्रमो न संवेद्यत इत्येतावदेव। न तु तस्य नास्तित्वमिति। तस्माद्धेतोरित्यर्थः।

असंवेदने कारणमाह– **सजातीयतद्विकल्प - परम्परानुदयादिति। सजातीयानां** शब्दाभिधेयत्वेन तुल्यानां **तद्विकल्पानां** तद्भेदानां अर्थानां परम्परया अनुदयात् प्रतीततयाऽभावादित्यर्थः।

एतत् किंनिमित्तमित्याह– **सातिशयानुशीलनाभ्यासादिति।** सातिशयपरामर्शपौनःपुन्या-दित्यर्थः। तत्र दृष्टान्तमाह– **अभ्यस्तविषयव्याप्तिसमयस्मृतिक्रमवदिति।** एवं क्रमाङ्गीकारेऽभिधयैव नैमित्तिकार्थोऽपि प्रतिपाद्य इति न भवतीति स्थितम्। अत एव च गौणादिपरिग्रहोऽप्युपपद्यत इत्याह– **अन्यथेत्यादि। श्रुतिलिङ्गादिप्रमाणषट्कस्य पारदौर्बल्यमिति।** श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां

दिप्रमाणषट्कस्य पारदौर्बल्यम् इत्यादिप्रक्रियाविघातः। निमित्ततावैचित्र्येणैवास्याः समर्थितत्वात्, निमित्ततावैचित्र्ये चाभ्युपगते किमपरमस्मास्वसूयया॥

येऽप्यविभक्तं स्फोटं वाक्यं तदर्थमाहुः तैरप्यविद्यापदपतितैः सर्वेयमनुसरणीया प्रक्रिया। तदुत्तीर्णत्वे तु सर्वं परमेश्वराद्वयं ब्रह्म इति अस्मच्छास्त्रकारेण न न विदितं तत्त्वालोक[1]ग्रन्थं विरचयता इत्यास्ताम्॥

यत्तु भट्टनायकेनोक्तम्-- इह दृप्तसिंहादिपदप्रयोगे[2] च भयानकरसावेशकृतैव निषेधावगतिः, तदीयभीरुत्व[3]धीरत्व[4]प्रकृतिनियमावगममन्तरेणैकान्ततो निषेधावगत्यभावादिति, तत्र केवलार्थसामर्थ्यं निषेधगतेर्निमित्तमिति। तत्रोच्यते-- केनोक्तमेतत् वक्तृप्रतिपत्तृविशेषावगमविरहेण शब्दगतध्वननव्यापारविरहेण च निषेधावगतिः इति? प्रति[5]पत्तृप्रतिभासहकारित्वं ह्यस्माभिः द्योतनस्य प्राणत्वेनोक्तम्; भयानकरसावेशश्च न वार्यते, तस्य[6] भयमात्रेणोत्पत्त्यभ्युपगमात्। प्रतिपत्तुश्च रसावेशो रसाभिव्यक्त्यैव; रसश्च

समवाये पारदौर्बल्यमर्थविप्रकर्षादिति प्रमाणान्यन्यानि षट्कानि। तेषां पारदौर्बल्यं लिङ्गाच्छीघ्रग्राहिणी श्रुतिरित्यादि सोदाहरणं दर्शितम्। तदेतत्सर्वं दीर्घदीर्घाभिधाविलासे निरवकाशं स्यादित्यर्थः। प्रक्रियाविधाने हेतुमाह-- **निमित्ततेति।** निमित्ततावैचित्र्यं निमित्ततायां नानाविधत्वं दीर्घत्वमित्यर्थः। अस्याः अभिधायाः। इयमभिधैव दीर्घदीर्घलक्षणभावस्वधुरमुद्वोढुं समर्था, तत इत्यर्थः। अपि च अभिधाया यन्निमित्तत्वमर्थप्रतिपादने तस्य वैचित्र्यं नानाविधत्वमङ्गीक्रियते चेत् अर्थभेदोऽङ्गीकृतः स्यात्। ततो व्यापारभेदोऽभ्युपेत इति॥ किमस्मदुक्ते असमर्थ इत्याह-- **निमित्ततेति।** एवमन्विताभिधानवादिना न पराकरणीयो ध्वनिरिति प्रसाध्य वैयाकरणदर्शनमपि नैनं विरोद्धुमलमिति आह-- **येऽप्यविभक्तमित्यादि।** ये तावन्निरवयवमेकं वाक्यं निरवयवस्य वाक्यार्थस्य वाचकमिति वदन्ति, ते किं विद्यापदपतिताः एवं ब्रुवते, उत अविद्यापदपतिताः? नाद्यः कल्पः। विद्यापदपाते **तूष्णींभाव** एव स्यादिति। द्वितीयपक्षे इदं पदपदार्थविभागादिकं सर्वमङ्गीकरणीयम्। अन्यथा वचनस्यैवानुत्थानप्रसङ्गादिति। एवं शास्त्रकारान् प्रतिवाच्य काव्यविदः प्रत्याह--**यत्तु भट्टनायकेत्यादि।** भयानकरसावेशकृतैवेति। न वाच्यसामर्थ्यकृतेत्यर्थः।

परिहरति-- **तत्रोच्यत इत्यादि।** प्रतिपत्ता बोधयितव्यः। **तस्य** भयानकरसस्य **भयमात्रेण** भयेनैवोत्पत्तेरभ्युपगमात् **प्रतिपत्तुः**धार्मिकस्य **रसावेशः** भयानकरसावेशः रसाभिव्यक्त्यैव भवति नान्यथेत्यर्थः।

[1]क.ख.ग.ङ.च.(नि) तन्त्रालोक०. [2]क.ख.ग.घ.ङ.च.(नि) 'अपि' अधिकः. [3]क.ख.घ.ङ.च.(का) भीरु. [4]घ.ङ.च. ०वीरत्व०. [5]क.ख.ग.च.(नि) 'वक्तृ' इत्यधिकमादौ. [6]क.ख.ग.घ.ङ.च. अस्य.

व्यङ्ग्य एव; तस्य च शब्दवाच्यत्वं तेनापि नोपगतमिति व्यङ्ग्यत्वमेव। प्रतिपत्तुश्च[1] रसावेशो न नियतः; न ह्यसौ नियमेन भीरुधार्मिकसब्रह्मचारी सहृदयः। अथ तद्विशेषोऽपि सहकारी कल्प्यते, तर्हि वक्तृप्रतिपत्तृप्रतिभाप्राणितो ध्वननव्यापारः किं न सह्यते? किं च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति सुतरां[2] ध्वनिध्वंसोऽयम्। यदाह— "क्रोधोऽपि देवस्य वरेण तुल्यः"[3]॥

अथ रसस्यैवेयता प्राधान्यमुक्तं तत्को न सहते। अथ वस्तुमात्रध्वनेरेतदुदाहरणं न युक्तमित्युच्यते, तथापि काव्यो[4]दाहरणत्वात् द्वावप्यत्र ध्वनी स्ताम्[5], को दोषः? [6]**यदि तु** रसानुवेधेन विना न तुष्यते, तद्भयानकरसानुवेधोऽपि नात्र सहृदयहृदयदर्पणमध्यास्ते। अपि तूक्तनीत्या संभोगाभिलाषविभावभूतसंकेतस्थानोचितविशिष्ट**काक्वाद्यनुभावसंवल**-नोदित[7]शृङ्गाररसानुवेधः, रसस्यालौकिकत्वात्, तस्य तावन्मात्रादेव[8] चानवगमात्। प्रथमं निर्विवादसिद्धविविक्तविधिनिषेधप्रदर्शनाभिप्रायेण चैतद्वस्तुध्वनेरुदाहरणं दत्तम्। यस्तु ध्वनिव्याख्यानोद्यतस्तात्पर्यशक्तिमेव विवक्षासूचकत्वमेव वा ध्वननमवोचत्, स नास्माकं हृदयमावर्जयति। यदाहुः— "भिन्नरुचिर्हि लोकः" इति। तदेतदग्रे यथायथं प्रतनिष्याम

**व्यङ्ग्य एव।** न वाच्य इत्यर्थः। सब्रह्मचारी सदृशः। आशङ्कते— **अथेति। तद्विशेषोऽपि** सहृदयविशेषोऽपि। परिहरति— **तर्हीति॥** उपहसति— **किं चेति। क्रोधोऽपीति।** कश्चित् केनचित्क्रोधवशात् कृतमभीप्सितार्थ-युक्तत्वात् अनुग्रहं मन्यमान आहैवम्। **काव्योदाहरणत्वादिति।** काव्योदाहरणेषु लिलक्षयिषितमेव भवेत्, नान्यत् **किञ्चिदिति न नियमः, अन्येषामपि बहूनां प्रस्तावान्तरे प्रतिपाद्यानां संभवात्।** कुत एतत्? **काव्यत्वात्। काव्यं खलु विचित्रार्थं भवति। शास्त्रोदाहरणे लिलक्षयितमेव स्यादिति भावः।**

**द्वावपीति।** वस्तुध्वनिश्च रसध्वनिश्च **स्तां** भवेताम्। अथ यदि रसे निर्बन्धः, तर्हि शृङ्गार एव रसोऽस्तु न भयानक इत्याह। **यदित्वित्यादि। संभोगेति।** संभोगाभिलाषस्य **विभावभूत**मालम्बनभूतं यत् संकेतस्थानं तदुचितैः विशिष्टकाक्वादिभिः निर्णयकाकुनयनविकारादिभिरनुभावैः संवलनात् मिश्रणादुदित-शृंगाररसानुवेध इति यावत्। तर्हि किमेतत् रसध्वनेरुदाहरणत्वेन न कृतमित्यत्राह— **तस्येति। तावन्मात्रादेव चानवगमादिति।** तावन्मात्रात् स्वरूपव्यावर्तनविरहेण केवलमुदाहरणमात्रात् रसस्यानवगमादित्यर्थः। व्याख्यानान्तरं प्रतिक्षिपति— **यस्त्वित्यादि।** तदेतत्तात्पर्यविवक्षासूचकत्वद्वयातिरिक्तध्वननस्वरूपमिति यावत्।

[1]क.ख.ग.घ.ङ.च.(का) अपि. [2]क.ख.ग.घ.च.(का) सुष्ठुतरां. [3](नि) (का) 'इति' इत्यधिकम्. [4]क.ख.(नि) कार्यो. [5]ग.(नि)(का) स्तः. [6]क.ख.ग.(नि) 'यदि तु ......अध्यास्ते' नास्ति. [7]क.ख.(नि)(का) ०शबलनोचित०. [8](कौ) तावन्मात्रेण.

इत्यास्तां तावत् ॥ **भ्रमेति॥** अतिसृष्टोऽसि, प्राप्तस्ते भ्रमणकालः॥ **धार्मिकेति॥** कुसुमाद्युपयोगार्थं[1] युक्तं ते भ्रमणम्॥ **विस्रब्ध इति॥** शङ्काकारणवैकल्यात् ॥ **स इति॥** यस्ते भयप्रकम्पामङ्गलतिकामकृत ॥ **अद्येति॥** दिष्ट्या वर्धसे इत्यर्थः॥ **मारित इति॥** पुनररयानुत्थानम्॥ **तेनेति॥** यः पूर्वमेव कर्णाकर्णिकया[2] त्वयाप्याकर्णितो गोदावरीकच्छगहने प्रतिवसतीति। पूर्वमेव हि तद्रक्षायै एतत्तयोपश्राविततोऽसौ ; अधुना तु दृप्तत्वात् ततो गहनान्निस्सरतीति प्रसिद्धगोदावरीपरिसरानुसरणमपि तावत् कथाशेषीभूतम्, का कथा तल्लतागृह[3]प्रवेशशङ्काया इति भावः॥

श्वश्रूरत्र शेते (अथवा निमज्जति) अत्राहं दिवसकं प्रलोकय।
मा पथिक रात्र्यन्ध शय्यायामावयोः शयिष्ठाः[4] ॥

महँ इति निपातोऽनेकार्थवृत्तिरत्र, आवयोरित्यर्थे न तु ममेति; एवं हि विशेषवचनमेव शङ्काकारि भवेदिति प्रच्छन्नाभ्युपगमो न स्यात्। [5]काञ्चित्प्रोषितपतिकां तरुणीमवलोक्य प्रवृद्धमदनाङ्कुरः[6] पान्थः अनेन निषेधद्वारेण तयाभ्युपगत इति निषेधाभावोऽत्र विधिः;न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्तनास्वभावः, सौभाग्याभिमानखण्डनाप्रवेशात्। अत एव 'रात्र्यन्ध' इति समुचितसमयसंभाव्यमानविकाराकुलितत्वं ध्वनितम्। भावतदभावयोश्च साक्षाद्विरोधात् वाच्याद्व्यङ्ग्यस्य स्फुटमेवान्यत्वम्॥

यच्चाह भट्टनायकः—"अहमित्यभिनयविशेषेणात्मदशावेदनात् शाब्दमेतदपि" इति, तत्र अहमिति तावत् शब्दस्य नायं साक्षादर्थः; काक्वादिसहायस्य च तावति ध्वननमेव व्यापार इति ध्वनेर्भूषणमेतत्॥

प्रकृतोदाहरणे यथाभिप्रायं दर्शयति—**भ्रमेति।** आकर्णितपूर्वत्वं समर्थयति— **पूर्वमेवेति।** श्वश्रूरित्यादि **अनेकार्थवृत्तिरिति** बहुवचन इत्यर्थः॥ विधेर्निमन्त्रणत्वे बाधमाह—**सौभाग्येति। प्रवेशात्।** प्रसङ्गादित्यर्थः। **अत एवेति।** सौभाग्याभिमानादित्यर्थः। समुचितसमयः संभोगोचितरात्रिसमयः। अत्र भट्टनायकमतमनुवदति। **यच्चाहेति एतदपीति।** एतन्निषेधद्वारेण अभ्युपगमनम्, अपीत्यनेनोक्तचरं प्रकाशयति। परिहरति— **तत्रेति।** साक्षादर्थः। मुख्यार्थः। अभिधाव्यापारार्थ इत्यर्थः। काक्वेति, काक्वादिसहायस्याऽहंशब्दस्यायमर्थश्चेत् तत्राप्यस्य ध्वननमेव व्यापारो नाभिधेत्यर्थः।

[1]क.ख.ग.(नि)(का) उपकरणार्थं. [2]क.ख.ग.घ.ङ.च.(नि)(का) कर्णोपकर्णिकया. [3]क.ख.ग.(का) गहन. [4]क.ख.(नि) माङ्क्षीः। अत्र शयिष्ठा वा. [5]क.ख.(नि) कश्चित्. [6]क.ख.(नि)(का) 'संपन्नः' इत्यधिकः.

'अत्ता' इति प्रयत्नेनानिभृतसंभोगपरिहारः। अथ [1]च यद्यपि भवान् मदनशरासारदार्यमाणहृदयः उपेक्षितुं न युक्तः, तथापि किं करोमि, पापो दिवसकोऽयम्। अनुचितत्वात् कुत्सितोऽयमित्यर्थः। प्राकृते पुंनपुंसकयोरनियमः। न च सर्वथा त्वामुपेक्षे; यतोऽत्रैवाहं तत्प्रलोकय नान्यतोऽहं गच्छामि । तदन्योन्यवदनावलोकनविनोदेन दिनं तावदतिवाहयाव इत्यर्थः। प्रतिपन्नमात्रायां च रात्रावन्धीभूतो मदीयां[2] शय्यां मा श्लिक्षः, अपि तु निभृतनिभृतमेतदत्ताभिधाननिकटकण्टकनिद्रान्वेषणपूर्वकमितीयदत्र ध्वन्यते॥

व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तथा विना दाक्षिण्यहतस्य जनिषत[3]॥

अत्र व्रजेति विधिः। न प्रमादादेव नायिकान्तरसङ्गमनं तव, अपि तु गाढानुरागात्, येन अन्यादृङ्मुख[4]वर्णः गोत्रस्खलितादि च। केवलं पूर्वकृतानुपालनात्मना दाक्षिण्येनैकरूपताभिमानेन त्वमत्र स्थितः, तत्सर्वथा शठोऽसि इति गाढमन्युरूपोऽयं खण्डितनायिकाभिप्रायः अत्र प्रतीयते। न चासौ [5]व्रज्याभावरूपो निषेधः; नापि विध्यन्तरमेव अन्यनिषेधाभावः।

दे[6] इति निपातः प्रार्थनायाम् । आ इति तावच्छब्दार्थे ।
प्रार्थये, प्रसीद [7]तावत्, निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे॥

अत्र व्यवसितात् गमनान्निवर्तस्व इति प्रतीतेः निषेधो वाच्यः। गृहागता नायिका

प्राकृतेषु पुंनपुंसकयोरनियम इत्येतच्चिन्त्यम्। दिवसशब्दो हि पुंनपुंसकलिङ्ग। न च कुत्सा कप्रत्ययान्तः पुल्लिङ्ग एवेति नियमः। **अन्धीभूतः** मदनविजृम्भान्धीभूतः **मा श्लिक्षः** मा प्रापः। निभृतनिभृतप्राप्तेर्हेतुमाह-- **एतदिति।**

एतस्य श्वश्रूनाम्नः **कण्टकस्यानर्थस्य निद्रान्वेषणपूर्वकमिति। व्रजेत्यादि। अत्र व्रजेति विधिरिति** विधिरूपवाच्यार्थानुवादः। प्रतीयमानस्यानुभवरूपत्वं प्रदर्शयितुं तत्स्वरूपं प्रतिपादयति। **न प्रमादादेवेत्यादि।** अतो विवक्षितमाह **न चेति।** असौ प्रतीयमानार्थः। **अन्यनिषेधाभाव इति।** व्रज्याया अन्यस्य निषेधाभावः इति यावत्। **दे आ इत्यादि।** अत्र वाच्यस्य निषेधात्मकत्वं समर्थयति— **अत्र व्यवसितादिति।**

**[1]क.ख.ग.ङ.(नि)(का) 'च' नास्ति. [2]ग.(नि)(का) मदीयायां शय्यायां. [3]क.ख. जनिष्यते. [4]क.ख.(का) राग; ग.घ. वर्णो इति. [5]क.ख.(नि) विध्यभाव०. [6]क.ख.ग.(नि) हे. [7]क.ख.(नि)(का) तावत्प्रसीद.**

गोत्रस्खलिताद्यपराधिनि नायके सति ततः प्रतिगन्तुं प्रवृत्ता नायकेन चाटूपक्रमपूर्वकं निवर्त्यते— न केवलं स्वात्मनः मम च निवृत्त्या[1] विघ्नं करोषि यावदन्यासामपि। ततस्तव न कदाचन सुखलवलाभोऽपि भविष्यति। अत एव हताशासि इति वल्लभाभिप्रायरूपः चाटुविशेषो व्यङ्ग्यः। यदि वा सख्योपदिश्टमानापि तदवधीरणया गच्छन्ती सख्या [2]उच्यते— न केवलमात्मनो विघ्नं करोषि लाघवादबहुमानास्पदम् आत्मानं कुर्वती, अत एव हताशा, यावद्वदनचन्द्रिकाप्रकाशितमार्गतया अन्यासाम[3]प्यभिसारिकाणां विघ्नं करोषि -- इति सख्यभिप्रायरूपश्चाटुविशेषो व्यङ्ग्यः। अत्र तु व्याख्यानद्वयेऽपि व्यवसितात् प्रतीपगमनात् प्रियतमगृहगमनाच्च निवर्तस्वेति पुनरपि वाच्य एव विश्रान्तेः गुणीभूतव्यङ्ग्य[4]भेदस्य प्रेयोऽलङ्कारस्य पारम्पर्येण रसवदलंकारस्य उदाहरणमिदं स्यात्, न ध्वनेः। तेन अयमत्र भावः— काचित् रभसात् प्रियतममभिसरन्ती तद्गृहाभिमुखमागच्छता तेनैव हृदयवल्लभेन एवमुपश्लोक्यते अप्रत्यभिज्ञानच्छलेन। अत एवात्मप्रत्यभिज्ञापनार्थमेव नर्मवचनम् 'हताशे' इति। अन्यासां[5] च विघ्नं करोषि; तव चेप्सितलाभो भविष्यतीति का प्रत्याशा। अत एव मदीयं वा गृहमागच्छ,त्वदीयं वा गच्छाव इत्युभयत्राप्य[6]तात्पर्यादनुभयरूपो वल्लभाभिप्रायश्चाट्वात्मा व्यङ्ग्य इत्येवाव[7]तिष्ठते। अन्ये तु तटस्थानां सहृदयानामभिसारिकां प्रतीयमुक्तिरित्याहुः । तत्र हताशे इत्यामन्त्रणादि[8] युक्तमयुक्तं वेति सहृदया एव प्रमाणम्॥

उदाहरणवाक्यस्यात्मलाभनिमित्तं प्रकरणमाह गृहमागतेति। प्रतीयमानं प्रकाशयति— **न केवलमित्यादि।** प्रकारान्तरमाह-**यदि वेत्यादि।**

अत्र व्यङ्ग्यं दर्शयति **न केवलमिति।** उभयथाप्यत्र मध्यमकाव्यत्वं प्रसज्यत इत्याह— **अत्रत्वित्यादि।** **निवर्तस्वेति** स्वरूपे वाच्ये अस्य प्रतीयमानस्य विश्रमाद्वाच्यस्याऽङ्गित्वे सति योऽत्र प्रतीयते रतिभावः। शृंगारो वा, तस्याङ्गत्वादपराङ्गव्यंग्यस्य प्रेयसोऽलङ्कारस्य रसवत इदमुदाहरणं युक्तं, न ध्वनेः। ध्वनौ हि वाच्यस्य न प्राधान्यं अपि तर्हि व्यंग्यस्येत्यर्थः। अत्र पुनर्व्यङ्ग्यस्य चाटुरूपस्य न प्राधान्यं वाच्ये विश्रान्तत्वात्, भावरसयोरपि न प्राधान्यं, चमत्कारकृता वाच्येन न्यक्कृतत्वादिति भावः। उदाहरणवाक्यस्य वक्त्रन्तरत्वमभिमतं केषांचिदित्याह—

अथ ध्वन्युदाहरणानुकूलमर्थं वक्तुं प्रकरणमाह— **तेनायमत्रेति।** अत्र व्यङ्ग्यमाह— **इति एवावतिष्ठत इति।** अस्य व्यङ्ग्यस्य वाच्ये विश्रान्त्यभावात्। प्रधानत्वेन ध्वन्युदाहरणमिदं युक्तमिति भावः। **अन्ये त्विति।** तदेतदयुक्तमित्यभिप्रायेणाह— **तत्रेति।**

[1]ग.घ.ङ.च.(का) निवृत्ति. [2]क.ख.ग.(नि) उपदिश्यते. [3]क.ख.ग.च.(नि) 'अपि' नास्ति. [4]ग. व्यङ्ग्यस्य च. [5]क.ख.(नि) अन्यासामपि. [6]क.ख.ग.(नि)(का) ०त्रापि तात्पर्य०. [7]क.ख.ग.(नि)(का) ०व पर्यवतिष्ठते. [8]ग.घ.ङ.च. आमन्त्रणौचित्य.

एवं वाच्यव्यङ्ग्ययोः धार्मिकपथिक[1]प्रियतमाभिसारिकाविषयैक्येऽपि स्वरूपविरो[2]धात् भेद इति प्रतिपादितम्। अधुना तु विषयभेदादपि व्यङ्ग्यस्य वाच्याद्भेद इत्याह– **क्वचिद्वाच्यादिति॥ व्यवस्थापित इति॥** विषयभेदोऽपि विचित्ररूपो व्यवतिष्ठमानः सहृदयैः व्यवस्थापयितुं शक्यत इत्यर्थः।

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥

**कस्स**[3] **वेति॥** अनीर्ष्यालोरपि भवति रोषः। दृष्ट्वैव कृत्वापि। कुतश्चिदेवापूर्वतया प्रियायाः **सव्रणमधरं** विलोक्य। **सभ्रमरपद्माघ्राणशीले**। शीलं हि कथंचिदपि वारयितुं न शक्यम्। **वारिते** वारणायां वामे [4]तदनङ्गीकारिणि सहस्वेदानीम् उपालम्भपरम्परामित्यर्थः। अत्रायं भावः– काचिदविनीता कुतश्चित् खण्डिताधरा, निश्चिततत्ताविधसन्निधाने तद्भर्तरि, तमनवलोकमानयेव कयाचिद्विदग्धसख्या तद्वाच्यतापरिहारायैवमुच्यते। सहस्वेदानीमिति तु वाच्यमविनयवतीविषयम्। भर्तृविषयम् अपराधो नास्तीत्यावेद्यमानं व्यङ्ग्यम्। सहस्वेत्यपि च तद्विषयं व्यङ्ग्यम्। तस्यां च प्रियतमेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेशिकलोकविषयं चाविनगप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम्। [5]तत्सपत्न्यां च [6]तदविनयप्रह्लादितायां[7] सौभाग्यातिशयख्यापनम् 'प्रियायाः' इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। सपत्नीमध्ये इयता खलीकृतास्मीति लाघवमात्मनि ग्रहीतुं न युक्तम्, प्रत्युतायं बहुमानः। सहस्व शोभस्वेदानीम् इति सखीविषयं सौभाग्य[8]ख्यापनं व्यङ्ग्यम्। अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभा इत्थं रक्षिता, पुनः

**एवमिति।** **प्रथमोदाहरणे** वाच्यव्यङ्ग्ययोर्द्वयोरपि **धार्मिक एव विषयः।** द्वितीये पान्थः। तृतीये प्रियतमा। चतुर्थेऽभिसारिका। **कस्यवेति। कृत्वापीति।** स्वयं कृत्वापीत्यर्थः। कुतश्चिद्देव येन केनापि निमित्तेन लक्षणविगलनादिना **अपूर्वतया** नवतयोदाहरणस्य प्रकरणं दर्शयति। **काचिदित्यादि।** कुतश्चित् केनचित् चौर्यकामुकेनेत्यर्थः। **वाच्यता** अपराधः। विषयभेदं दर्शयति– **सहस्वेत्यादि।** भर्तृविषयमन्यदपि व्यङ्ग्यमस्तीत्याह– **सहस्वेत्यपि चेति।** अस्यास्तपस्विन्या इदमेवंविधं अधरव्रणत्वं सहस्वेत्यर्थः।

एवं भर्तृविषये व्यङ्ग्यद्वयमुक्तम्। अथ प्रातिवेशिकजनादिविषयान्तरविषयत्व्यङ्ग्यभेदप्रकाशनं करोति **तस्यामित्यादिना। तद्व्यलीकशंकितेत्यादि** तदप्रीतिशंकिनः भर्त्रेर्ष्याशङ्किनः॥ शङ्का अपि नत्वसंभावना। प्रत्यायनं विश्वासनम्। नास्याः कश्चिदपराध इति **निश्चायनम्। तस्यां चेति सौभाग्यातिशयः।** अविनयवतीसौभाग्यातिशयः। अविनयवतीविषयमपि व्यङ्ग्यमप्यस्तीत्याह– **सपत्नीमध्ये** इत्यादि।

[1]क.ख.ग.(नि)(का) पान्थ. [2]क.ख.ग.(नि)(का) भेदात्. [3]क.ख.ग.घ.च.(नि)(का) कस्य वेति. [4]क.ख.ग.(नि) तदङ्गीकारिणि. [5]क.ख.ग.घ.च.(नि) तत्पत्न्याम्. [6]क.ख.ग.(नि)(का) 'तदुपालम्भन' इत्यधिकः. [7]क.ख.(नि) (का) प्रहृष्टायाम्. [8]क.ख.ग. (का)०प्रख्या०.

प्रकटाधररदनाविर्धिरत्र न युक्तः इति तच्चौर्यकामुकविषयसम्बोधनं व्यङ्ग्यम् । इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यमिति। तदेतदुक्तं व्यवस्थापितशब्देन।। **अत्र इति।।** द्वितीयोद्द्योते "असंलक्ष्यक्रमव्यङ्ग्यः क्रमेण[1] द्योतितः परः" इति विवक्षितान्यपरवाच्यस्य द्वितीयप्रभेदवर्णनावसरे। यथा[2] हि विधिनिषेध-तदनु[3]भयात्मना रूपेण संकलय्य वस्तुध्वनिः संक्षेपेण सुवचः[4] तथा नालङ्कारध्वनिः, अलङ्काराणां भूयस्त्वात् । तत एवोक्तम्– **सप्रपञ्चमिति।। तृतीयस्त्विति।।** तुशब्दो व्यतिरेके। वस्त्वलंकारावपि शब्दाभिधेयत्वमध्यासाते तावत् ; रसभावतदाभासतत्प्रशमाः पुनर्न कदाचिदभिधीयन्ते ;अथ चास्वाद्यमानताप्राणतया [5]भान्ति। तत्र ध्वननव्यापारादृते नास्ति कल्पनान्तरम्, स्खलद्गतित्वाभावे मुख्यार्थबाधादेर्लक्षणानिबन्धनस्या-नाशङ्कनीयत्वात्। औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्या रसो व्यभिचारिण्या भावः। अनौचित्येन तदाभासः, रावणस्येव सीतायां रतेः। यद्यपि तत्र हास्यरसरूपतैव "शृङ्गाराद्धि भवेद्धास्यः" इति वचनात्, तथापि पाश्चात्योयं सामाजिकानां स्थितिः। तन्मयीभवनदशायां तु रतेरेवास्वाद्यतेति शृङ्गारतैव भाति पौर्वापर्यविवेकावधीरणेन, "दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिम्" इत्यादौ। तदसौ शृङ्गाराभास एव; तदङ्गं भावाभासः। चित्तवृत्तेः प्रशम एव प्रक्रान्तायाः हृदयमाह्लादयति यतो विशेषेण, तत एव तत्संगृहीतोऽपि पृथग्गणितोऽसौ। यथा–

**रदनविधिः**। दन्तखण्डनविधिः। संबोधनं प्रबोधनं उपदेश इति यावत्। अयं व्यङ्ग्यप्रपञ्चो ग्रन्थकारस्याभिमत इत्याह– **तदेतदिति।** द्वितीयप्रभेदः संलक्ष्यक्रमव्यङ्ग्यः सप्रपञ्चग्रहणस्योपपत्तिं दर्शयति। **यथाहीति।।** व्यतिरेकं प्रकाशयति– **वस्त्वलङ्काराविति** । **रसादिलक्षण** इत्यत्रादिशब्दावरुद्धानाह– **रसभाव-तदाभासतत्प्रशमा इति। अथ चेति।** तथापीति यावत्।

कल्पनान्तराभावस्य हेतुमाह– **स्खलद्गतित्वाभाव इति। लक्षणानिबन्धनस्य** लक्षणानिमित्तस्य रसादीनां विषयमाह– **औचित्येनेत्यादि।** यदा चित्तवृत्तिरास्वाद्यत्वे स्थायिनी भवति, तदा रसः। यदा व्यभिचारिणी तदा भावः, तदाभासः रसभावाभासः। अत्र दृष्टान्तमाह– **रावणस्येति।** आशङ्कते– **यद्यपीति।** परिहरति– **तथापीति।** इयं हास्यरसरूपताम्। एवं रसाभासं प्रदर्श्य भावाभासं दर्शयति।। **तदङ्गं भावाभास इति।**

तदंगं रसाभासाङ्गम्। तदङ्गाभासः। अथ भावप्रशमं निरूपयति। **चित्तवृत्तेरिति** तत्संगृहीतोऽपि। भावसंगृहीतोऽप्यसौ भावप्रशमः पृथग्गणितः। तत्र हेतुमाह– **तत एवेति।।**

कुत एवेत्याह– यतो विशेषणं न विशेषप्रक्रान्तायाश्चित्तवृत्तेः प्रशम एव हृदयमाह्लादयति, तत

[1]क.ख.ग.(नि) (कः) ०क्रमेणो०. [2]क.ख.ग. (नि) तथा हि. [3]क.ख.ग. (नि) तदुभय. [4]क.ख.ग.(नि) सुवचनः. [5]क.ख.ग.(नि) प्रतिभान्ति.

"एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
[1]रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम्।
दम्पत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यावृत्तकण्ठग्रहः[2]॥"

इत्यत्रेर्ष्या[3]क्रोधात्मनो मानस्य प्रशमः। न चायं रसादिरर्थः 'पुत्रस्ते जातः' इत्यतो यथा हर्षो जायते तथा; नापि लक्षणया; अपितु सहृदयस्य हृदयसंवादबलाद्विभावानुभावप्रतीतौ तन्मयीभवने[4]नास्वाद्यमान एव रस्यमानतैकप्राणः सिद्धस्वभावसुखादिविलक्षणः परिस्फुरति। तदाह– **प्रकाशत[5] इति॥** तेन तत्र शब्दस्य ध्वननमेव व्यापारोऽर्थसहकृतस्येति। विभावाद्यर्थोऽपि पुत्रजन्महर्षन्यायेन तां चित्तवृत्तिं जनयतीति जननातिरिक्तोऽर्थस्यापि व्यापारो ध्वननमेवोच्यते॥ **स्वशब्देति॥** शृङ्गारादिना शब्देन अभिधाव्यापारवशादेव॥ **निवेदितत्वेनेति॥ विभावादीति॥** तात्पर्यशक्त्येर्थः। तत्र स्वशब्दस्यान्वयव्यतिरेकौ रस्यमानतासारं रसं प्रति निराकुर्वन् ध्वननस्यैव ताविति दर्शयति– **न च सर्वत्रेति॥** यथा भट्टेन्दुराजस्य–

"यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत्।
दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः॥" इति॥

अत्रानुभावविभावावबोधानन्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वण[6]गोचरोऽर्थात्मा[7] स्फुरत्येवाभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिशब्दाभावेऽपि। एवं व्यतिरेकाभावं प्रदर्श्यान्वयाभावं

एवेति यावत्। **न चायमिति।** नापि लक्षणयेति जायते इत्यनुषङ्गः। अभिधयेत्याशंकैव नेत्यपिशब्दाशयः। तर्हि कीदृशो रसादिरित्यत्राह– **अपित्विति।** सिद्धस्वभाव इति जनननिषेधः। अत एव सुखादिविलक्षण इति **ध्वननमेवेति।** नाभिधा न लक्षणेति व्यावर्त्यम्। ननु शब्दो रसादिकमजीजनत् अर्थस्तु विभावादीनजनयत्। यथा पुत्रजन्मार्थो हर्षमित्यत्राह– **विभावाद्यर्थोऽपीति।**

**साक्षाच्छब्दस्य व्यापारविषय इति।** अत्र साक्षाच्छब्दव्यापारोऽभिधा। स्वशब्दनिवेदित्वेनेति। एतद्व्याचष्टे– **स्वशब्देतीत्यादि–** विभावादिप्रतिपादकत्वेनैतद्विवृणोति– **विभावादीतीत्यादि।** प्रथमकल्पपराकरणं प्रस्तौति– **तत्रेति।** एतौ अन्वयव्यतिरेकौ। **यद्विश्रम्येति।** विश्रम्यान्तर्निषद्य, अलसीभूयेति

**[1]ग.घ.(नि) (का) अन्योन्यस्य हृदि स्थिते. [2]ग.ङ.(का) ग्रहम्. [3]क.ख.(नि) (का) रोषात्मनो. [4]क.ख.ग.घ.ङ.च.(नि)(का) भावेन. [5]क.ख. प्रकाश्यत. [6]क.ख. 'चर्वण' नास्ति। घ.ङ.(नि) (का) चर्वणा. [7]क.ख.ग.(नि) (का) अर्थो रसात्मा.**

दर्शयति— **यत्रापीति॥** तदिति स्वशब्दावेदितत्वम्[1]॥ **प्रतिपादनमुखेनेति॥** शब्दप्रयुक्तया विभावादिप्रतिपत्त्येत्यर्थः॥ **सा केवलमिति।** तथा हि—

याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानतां[2]
कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया।
तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम्॥ इति॥

अत्र विभावानुभावम[3]म्लानतया प्रतीयते,[4] उत्कण्ठा चर्वणागोचरं प्रतिपद्यत एव। सोत्कण्ठाशब्दः केवलं सिद्धं साधयति। उत्कमित्यनेन तु उक्तानुभावानुकर्षणं कर्तुं सोत्कण्ठाशब्दः प्रयुक्त इत्यनुवादोऽपि नानर्थकः। पुनरनुभावप्रतिपादने हि पुनरुक्तम्, अतन्मयीभावो वा॥ **न तु तत्कृतेति॥** अत्र हेतुमाह— **विषयान्तर इति॥** "यद्विश्रम्य" इत्यादौ। न हि यदभावेऽपि यद्भवति तत्कृतं तदिति भावः। अदर्शनमेव प्रथयति— **न हीति॥** केवलशब्दार्थं स्फुटयति— **विभावादीति ॥ काव्य इति॥** तव मते काव्यरूपतया प्रसज्यमान इत्यर्थः॥ **मनागपीति॥**

"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
[5]बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥" इत्यत्र।

एवं स्वशब्देन सह रसादेर्व्यतिरेकान्वयाभावमुपपत्त्या प्रदर्श्य तथैवोपसंहरति— **यतश्चेत्यादिना कथंचिदित्यन्तेन॥** अभिधेयमेव सामर्थ्यं सहकारिशक्तिरूपं विभावादिकं

यावत्। **दरिद्रति**—शुष्यन्ति कृशीभवन्ति। **याते** इत्यादि। **झम्पानतां**— रहःकेलीसाक्षिभावादित्यर्थः। जलचरैः सारसादिभिः। **विभावानुभावमिति** एकवद्भावेन निर्देशः। विभावः— शौरिविरहो विशिष्टस्थानं च। अनुभावा गीतबाष्पादयः। **सिद्धं साधयति** – प्रतीतामुत्कण्ठामनुवदतीत्यर्थः। उत्कशब्देन पुनर्योऽयमुत्कण्ठानुभावः कृतः स न व्यर्थः। उक्तानुभावानुकर्षणार्थत्वादित्याह— **उत्कमित्यनेनेति। पुनरिति।** पुनराकृष्टानुभावप्रदर्शने पुनरुक्तातन्मयीभावः पुनरुक्तोत्कण्ठा तन्मयीभावश्च न व्यर्थ इत्यर्थः।

**न तु तत्कृतेति।** तेन स्वशब्देन कृता रसादिप्रतीतिरित्यर्थः। स्वशब्दमात्रप्रयोगे रसाप्रतीतेरुदाहरणं दर्शयति—**शृङ्गारहास्य इति।** अभिधेयसामर्थ्याक्षिप्तत्वपदं व्याचष्टे—**अभिधेयमेवेति।** अत्र च प्रथमपभिधेय-सामर्थ्यमिति कर्मधारये षष्ठीतत्पुरुषश्च भवतीति कर्मधारयाश्रयेण शब्दध्वननपक्षं प्रदर्शयति। **शब्दस्य**

[1]क.ख. निवेद्यत्वं, ग.(नि) (का) निवेदितत्वम्. [2]क.ख.ग.घ. कम्पानतां, ङ. संपन्नताम्, च. संपानताम्. [3]क.ख.ग.(नि) (का) भावौ म्लानतया प्रतीयेते. [4]क.ख.ग.घ.ङ.च.(नि) (का) प्रतीयते, प्रतीयेते, (कौ) प्रतियतः. [5]घ.ङ.च. बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः.

रसध्वनने शब्दस्य कर्तव्ये, अभिधेयस्य च पुत्रजन्महर्षभिन्नयोगक्षेमतया जननव्यतिरिक्ते दिवाभोजनाभावविशिष्टपीनत्वानुमितरात्रिभोजनविलक्षणतया चानुमानव्यतिरिक्ते ध्वनने कर्तव्ये सामर्थ्यं शक्तिः विशिष्टसमुचितवाचकसाकल्यम्—इति द्वयोरपि शब्दार्थ-योर्ध्वननव्यापारः। एवं द्वौ पक्षावुपक्रम्याद्यो दूषितः। द्वितीयस्तु कथंचिद्दूषितः, कथंचिदङ्गीकृतः— जननानुमानव्यापाराभिप्रायेण दूषितः, ध्वननाभिप्रायेणाङ्गीकृतः। यस्त्वत्रापि तात्पर्यशक्तिमेव ध्वननं मन्यते, स न वस्तुतत्त्ववेदी। विभावानुभावप्रतिपादिके हि वाक्ये तात्पर्यशक्तिर्भेदे, संसर्गे वा पर्यवस्येत्; न तु [1]रस्यमानतासारे रसे— इत्यलं बहुना। इतिशब्दो हेत्वर्थः[2]; इत्यतो[3] हेतोस्तृतीयोऽपि प्रकारो वाच्याद्भिन्न एवेति संबन्धः॥ [4]**सहेवेति॥** इवशब्देन विद्यमानोऽपि क्रमो न संलक्ष्यत इति[5] दर्शयति ॥ **अग्र इति॥** द्वितीयोद्द्योते॥

एवं "प्रतीयमानं पुनरन्यदेव" इतीयता ध्वनिस्वरूपं व्याख्यातम्। अधुना
I.5 काव्यात्मत्वमितिहासव्याजेन[6] दर्शयति॥ **काव्यस्यात्मेति॥ स एवेति॥** प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यम्, इतिहासबलात् प्रक्रान्त[7]वृत्तिग्रन्थार्थबलाच्च। तेन रस एव वस्तुत आत्मा वस्त्वलंकारध्वनी तु सर्वथा रसे[8] पर्यवस्येते इति वाच्यादुत्कृष्टौ

**रसध्वनने** रसव्यञ्जने कर्तव्येऽभिधेयमेव सामर्थ्यमित्यन्वयः। अभिधेयसामर्थ्यस्वरूपं प्रदर्शयति— **सहकारि-शक्तिरूपमिति।** तदेव विस्पष्टयति— **विभावादिरूपमिति॥** तथा चोक्तम्—

अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः। इति। षष्ठीतत्पुरुषाश्रयेणार्थध्वननपक्षं परामृशति —**अभिधेयस्य चेति। भिन्नयोगक्षेमतया** भिन्नन्यायतया। पुत्रजन्म खलु हर्षं जनयति, न तथा विभवाद्यर्थो रसं जनयतीति तद्विलक्षणत्वमर्थध्वननस्य। एवं जननपक्षः पराकृतः। अनुमानपक्षमपि पराकरोति—**दिवाभोजनेति।** विशिष्टं रात्रिभोजनं अविनाभावबललब्धं, न त्वेवं विभावादेः रसस्य चाविनाभाव इति वैलक्षण्यम्। **विशिष्टेति।** वाचकस्य विशिष्टत्वं गुणालङ्कारैरुचितत्वम्, सुकुमारमध्यमवर्णयोगः। **आद्यो दूषितः** शब्दध्वननपक्षो दूषितः। स्वशब्दनिवेदित्वनिराकरणेनेति शेषः।

**द्वितीयस्त्विति॥** द्वितीयः अर्थध्वननपक्षः। कथञ्चित् केनचित् प्रकारेण। कोऽयं प्रकार इत्यत्राह—**जननेति।** पक्षान्तरमनुभाव्य दूषयति। **यस्त्वत्रेति। भेदे संसर्गे वेति।** केषाञ्चित् गामानयेत्यादौ भेदो वाक्यार्थः। भेदः कर्मान्तरेभ्यः क्रियान्तरेभ्यश्च व्यावृत्तिः। संसर्गस्त्वार्थो न शाब्द इति। अन्येषां संसर्गो वाक्यार्थः। कर्मविशेषस्य क्रियाविशेषणसंबन्धः, भेदस्त्वार्थ इति। उभयपक्षेऽपि तात्पर्यशक्तिर्वाच्यकक्ष्यात्र किञ्चिदप्यतिक्रामतीत्यर्थः। **वृत्तिग्रन्थार्थबलादिति।** वृत्तिग्रन्थो रसादिलक्षण इत्यादि। ननु यदि वस्त्वलंकारध्वन्योः रसे पर्यवसानं तर्हि काव्यात्मा रस इति वक्तव्यम्, न तु सामान्येन ध्वनिरित्यत्राह—

[1]क.ख. रस्यमानसारो रसः. [2]क. (का) ख.ग. (नि) अर्थे. [3](नि) (का) इत्यपि, क.ख.ग. अतो. [4]क.ख.ग.(नि) सहैवेति. [5]ग.ङ.च.(नि) (का) इति तद्दर्शयति. [6]घ.च.(नि) (का) च. [7](के) प्रक्रान्तार्थ वृत्ति०. [8](के).क.ख. रसं प्रति पर्यवस्यत.

तावित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तम्।। **शोक इति।।** क्रौञ्चस्य द्वन्द्ववियोगेन सहचरी हननोद्भूतेन साहचर्यध्वंसेनोत्थितो यः शोकः स्थायिभावो निरपेक्षभावत्वाद्विप्रलम्भशृङ्गारोचितरतिस्थायिभावादन्य एव। स एव तथाभूत-विभावतदुत्थाक्रन्दाद्यनुभावचर्वणया हृदयसंवादतन्मयीभवनक्रमादास्वाद्यमानतां प्रतिपन्नः करुणरसरूपतां लौकिकशोकव्यतिरिक्तां स्वचित्तवृत्तिद्रुतिसमास्वाद्यसारां प्रतिपन्नो रसपरिपूर्णकुम्भोच्चलनवच्चित्तवृत्तिनिष्यन्दस्वभावां वाग्विलापादिवच्च समयानपेक्षत्वे[1]ऽपि चित्तवृत्तिव्यञ्जकत्वादिति नयेन अकृतकतयैवावेशवशात् समुचितच्छन्दोवृत्तादि-नियन्त्रितश्लोकरूपतां प्राप्तः—

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।

यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥" इति।

न तु मुनेः शोक इति मन्तव्यम्। एवं हि सति तद्दुःखेन सोऽपि दुःखित इति कृत्वा रसस्यात्मतेति निरवकाशं भवेत्। न च दुःखसंतप्तस्यैषा दशेति । एवं हि चर्वणोचित-शोकस्थायिभावात्मक[2]करुणरससमुच्चलनस्वभावत्वात् स एव काव्यस्यात्मा सारभूतो[3]ऽपरशाब्दवैलक्षण्यकारकः। एतदेवोक्तं हृदयदर्पणे— "यावत्पूर्णो न चैतेन तावन्नैव वमत्यमुम्" इति। 'अगमः' इति छान्दसेनाडागमेन।। **स एवेति।।** एवकारेणेदमाह— नान्य

**वाच्यादिति।** द्वन्द्वशब्दस्य साहचर्यार्थं प्रदर्शयति— **क्रौञ्चस्येति। निरपेक्षभावत्वादिति।।** विप्रलम्भशृङ्गारे रतेः सापेक्षभावत्वं करुणे तु निरपेक्षभावत्वम्। तथाभूतविभावः सहचरीहननम्। तदुत्थः सहचरीहननोत्थः। **समयानपेक्षत्वेऽपीति।** इह तावद्विलापप्रशंसाभर्त्सनादयः सन्ति वचनप्रकाराः। न च ते शोकबहुमानेर्ष्यादिभिरेव भवन्तीति नियन्तुं शक्यते। निमित्तान्तरेणापि भावात्। तथापि विलापः शोकरूपां चित्तवृत्तिं व्यनक्ति। स्तुतिर्बहुमानरूपां, भर्त्सनमीर्ष्यारूपां प्रश्नः संशयरूपामित्यस्ति न्यायः, तस्मादित्यर्थः।

अत्र मुनिर्दुःखित एवमवोचत् इति न प्रतिपत्तव्यमित्याह- **न तु मुनेरिति।** अत्र हेतुः। **एवं हीति।।** न खलु शोकमात्रं रस इति भावः। **न चेति। एषा दशा** श्लोकोचितरूपा दशा एव। **शोकेति।** इदं काव्यं करुणरसबलेन समुच्चलनस्वभावम्। अतो अस्य रस एवात्मेति यावत्। **अपरशाब्दवैलक्षण्यकारक इति।** शब्दान्तराभिधेयार्थवैलक्षण्यकारक इति यावत्।

हृदयदर्पणमिति कश्चित् काव्यलक्षणग्रन्थः। **यावत् पूर्ण** इति। यावत् कविरेतेन रसेन पूर्णो न भवति, तावदमुं रसं श्लोकमुखेन न वमतीत्यर्थः।

[1]क.ख ग.घ.ङ.च. पेक्षित्वे. [2]क.ख. भाववचनात्मक (को) भावचर्वणात्मक [3]क.ख.(नि) (का) सारभूतस्वभावो.

आत्मेति। तेन यदाह भट्टनायकः—

"शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः।
[1]अर्थे तत्त्वेन युक्ते[2]तु वदन्त्याख्यानमेतयोः॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्य[3]गीर्भवेत् ॥"

इति तदपास्तम्। व्यापारो हि यदि ध्वननात्मा रसनास्वभावः तन्नापूर्वमुक्तम्। अथाभिधैव व्यापारः तथाप्यस्याः प्राधान्यं नेत्यावेदितं प्राक्॥

श्लोकं व्याचष्टे— **विविधेति॥** विविधं तत्तदभिव्यञ्जनीयरसानुगुण्येन विचित्रं कृत्वा वाच्ये वाचके रचनायां च [4]प्रपञ्चेन यच्चारु शब्दार्थालङ्कारगुणयुक्तमित्यर्थः। तेन सर्वत्रापि ध्वननसद्भावेऽपि न तथा व्यवहारः। आत्मसद्भावेऽपि हि क्वचिदेव जीवव्यवहार इत्युक्तं प्राक्। तेनैतन्निरवकाशम्, यदुक्तं हृदयदर्पणे "सर्वत्र तर्हि काव्यव्यवहारः स्यात्" इति। निहतसहचरीति विभाव उक्तः। आक्रन्दितशब्देनानुभावः॥ **जनित इति॥** चर्वणागोचरत्वेनेति शेषः। ननु शोकचर्वणातो यदि श्लोक उद्भूतः तत्प्रतीयमानं वस्तु काव्यस्यात्मेति कुत इत्याशङ्क्याह— **शोको हीति॥** करुणस्य तच्चर्वणागोचरात्मनः शोकः स्थायिभावः। शोके हि स्थायिभावे ये विभावानुभावाः तत्समुचिता चित्तवृत्तिः चर्व्यमाणात्मा रस इत्यौचित्यात् स्थायिनो रसतापत्तिरित्युच्यते ; प्राक्स्वसंविदितं परत्रानुमितं च चित्तवृत्तिजातं संस्कारक्रमेण हृदयसंवादमादधानं चर्वणायामुपयुज्यते यतः[5]। ननु प्रतीयामानरूपमात्मा, तच्च त्रिभेदं प्रतिपादितम्; न तु रसैकरूपम्। अनेन चेतिहासेन रसस्यैवात्मभूतत्वमुक्तं भवतीत्याशङ्क्य अभ्युपगमेनैवोत्तरमाह— **प्रतीयमानस्य चेति॥** अन्यो भेदो वस्त्वलंकारात्मा। भावग्रहणेन[6] व्यभिचारिणोऽपि चर्व्यमाणस्य तावन्मात्रविश्रान्तावपि स्थायिचर्वणापर्यवसानोचितरसप्रतिष्ठामनवाप्यापि प्राणत्वं[7] भवतीत्युक्तम्॥ यथा—

अत्र भट्टनायकोक्तमनुभाषते— **तेनेति।** अयं व्यापारः किं ध्वननं, उताभिधेति विकल्पं हृदि निधाय परिहरति **तदपास्तमिति।**

**तेनेति।** विविधवाच्यवाचकरचनाप्रपञ्चचारुणः शब्दस्य काव्यत्वेन सिंहो देवदत्त इत्यादावपि ध्वननसद्भावेऽपि न काव्यव्यवहारः गुणालङ्कारादिसौन्दर्याभावादित्यर्थः।

एतत् पूर्वमेव समर्थितमिति स्मृतिमादधाति—**आत्मेति। ननु तु शोकेति। प्रतीयमानं वस्तु इति।** रस इत्यर्थः, इति भावः॥ **औचित्यादिति।** निमित्तत्वरूपादौचित्यात् स्थायी रसः संपद्यत इत्यर्थः। तत्र हेतुमाह— **प्रागिति। भावग्रहणेनेत्यादि। तावन्मात्रविश्रान्तावपीति।** स्वचर्वणामात्रविश्रान्त्यापि **भवतीत्युक्तमिति।** अथ चास्वाद्यमानताप्राणतया भान्तीत्यादाविति शेषः। अत्रोदाहरणं दर्शयति— **यथेति।**

[1]क.ख.ङ.च.(नि) (का) अर्थतत्वेन. [2]क.ख.(नि) (का) युक्तम्. [3]क.ख.(नि) (का) काव्यधी. [4]क.ख. 'प्रपञ्चेन' नास्ति. [5]क.ख.ग.(नि) 'यतः'. नास्ति. [6]क.ख.ग.घ.(नि) ग्रहणम्. [7](के). प्राणकत्वं.

"नप्त्रं नखाग्रेण विघट्टयन्ती विवर्तयन्ती वलयं विलोलम्।
आमन्द्रमाशिञ्जितनूपुरेण पादेन मन्दं भुवमालिखन्ती ॥"

इत्यत्र लज्जायाः। रसभावशब्देन[1] तदाभासतत्प्रशमावपि संगृहीतावेव, अवान्तरवैचित्र्येऽपि तदेकरूपत्वात्॥ **प्राधान्यादिति॥** रसपर्यवसानादित्यर्थः। तावन्मात्रविश्रान्तावपि चान्यशब्दवैलक्षण्यकारित्वेन वस्त्वलंकारध्वन्यो[2]रपि जीवितत्वमौचित्यादुक्तमिति भावः॥ एवमितिहासमुखेन प्रतीयमानस्य काव्यात्मतां प्रदर्श्य स्वसंवित्सिद्धमप्येतदिति दर्शयति–

I.6 **सरस्वतीति॥** वाग्रूपा भगवतीत्यर्थः। वस्तुशब्देनार्थशब्दं तत्त्वशब्देन च वस्तुशब्दं व्याचष्टे– **निःष्यन्दमानेति॥** दिव्यमानन्दरसं स्वयमेव प्रस्नुवानेत्यर्थः।

यदाह भट्टनायकः–

"वाग्धेनुर्दुग्ध एतं[3] हि रसं यद्बाल[4]तृष्णया ।
तेन नास्य समः स स्याद्दुह्यते योगिभिर्हि यः॥"

तदावेशेन विनाप्याक्रान्त्या **हि यो** योगिभिर्दुह्यते। अत एव

"यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥"

इत्यनेन साराग्र्यवस्तुपात्रत्वं हिमवत उक्तम्॥ **अभिव्यनक्ति परिस्फुरन्तमिति॥** प्रतिपत्तॄन्

**अत्र लज्जाया इति।** अत्र श्लोके लज्जाया व्यभिचारिणः शृङ्गाररसप्रविचर्वणीयतया काव्यजीवितत्वमित्यर्थः। ननु यदि वस्त्वलङ्कारध्वन्योः रसे पर्यवसानं तर्हि रस एवात्मेति वक्तव्यमित्यत्राह– **तावन्मात्रेति।** रसमात्रविश्रान्तौ चान्यशब्दः शब्दप्रतिपादितोऽर्थः तद्वैलक्षण्यकारित्वेन हेतुनाऽनयोर्जीवितत्वमुक्तमित्यर्थः।

**वाग्धेनुरिति।** वाग्धेनुर्बाले श्रोतरि वत्से च **तृष्णया** कृपया स्नेहेन च **एतं रसं** दुग्धे यत्, तेन **अस्य रसस्य** स समो न स्यात्। **यो** रसो **योगिभिर्दुह्यत इति** यावत्। असमानत्वं प्रदर्शयितुं चतुर्थपादार्थमाह– **तदावेशेनेति।** रसावेशेन विनापि योगिनो बलात्कारेण परमानन्दं दुहते। वाग्धेनुस्तु रसावेशेनैव रसपूर्णत्वात् **स्वयमानन्दं प्रस्नौति।** अतो न समत्वमित्यर्थः। **अत एवेति।** यतो रसपरिपूर्णैव धेनुरियं रसं प्रस्नौति, अत एव। पृथ्वी धेनुर्गर्भीकृतसारवस्तु प्रस्नुतवतीति हिमवतः साराग्र्यवस्तुपात्रत्वमुक्तमित्यर्थः।

एवं वाग्धेनोरनुग्रहात् सारभूतरसपात्रत्वं सहृदयानां भवतीति भावः। **अभिव्यनक्तीति।** सहृदयान्

[1]क.ख.(नि) (क) 'च' अधिकः. [2]क.ख.ग.घ.च.(नि) (का) ध्वने.. [3]क.ख. एवं, (कौ) एक. [4]क.ख.(नि) यल्लाभ.

प्रति सा प्रतिभा नानुमीयमाना, अपि तु तदावेशवशेन भासमानेत्यर्थः। यथोक्तमस्मदुपाध्यायभट्टतौतेन– "नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः" इति। प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा । तस्या विशेषो रसावेशवैवश्यसुन्दर[1]काव्यनिर्माणक्षमत्वम् । यदाह मुनिः– "कवेरन्तर्गतं भावम्" इति।। **येनेति।।** अभिव्यक्तेन स्फुरता प्रतिभाविशेषेण निमित्तेन महाकवित्वगणनेति यावत् ।।

**इदं चेति ।।** न केवलम् "प्रतीयमानं पुनरन्यदेव" इत्येतत्कारिकासूचितौ स्वरूपविषयभेदावेव, यावद्भिन्नसामग्रीवेद्यत्वमपि वाच्यातिरिक्तत्वे प्रमाणमिति यावत् ।

I.7 **वेद्यत इति।।** न तु न वेद्यते, येन न स्यादसाविति भावः। काव्यस्य तत्त्वभूतो योऽर्थस्तस्य भावना वाच्यातिरेकेणानवरतं चर्वणा तत्र विमुखानाम्। स्वराः षड्जादयः सप्त। श्रुतिर्नाम शब्दस्य वैलक्षण्यकारि[2] यद्रूपान्तरं तत्परिणा[3]मानां स्वरतदन्तरालोभयभेदकल्पिता द्वाविंशतिविधा। [4]आदिग्रहणेन जात्यंशकग्रामरागभाषाविभाषान्तरभाषादेशीमार्गा गृह्यन्ते। प्रकृष्टं गीतं येषां ते प्रगीताः; गातुं वा प्रारब्धा इत्यादिकर्मणि क्तः; प्रारम्भेण चात्र

प्रतीति शेषः। प्रतिपत्तुः सहृदयस्य। **तदावेशवशेन** रसावेशवशेन **स्वरूपविषयभेदावेवेति।** "प्रतीयमानं पुनरन्यदेवेति"–कारिकया अन्यदेवेति प्रतीयमानस्य स्वरूपमुक्तम्। भातीत्यनेन विषयभेदश्चोक्तः। सहृदयस्य खलु भातीति सहृदयो विषयः। **अथ च** प्रत्युतेति यावत्।

**श्रुतिर्नामेत्यादि। वैलक्षण्यमात्रकारि** भेदमात्रकारि रूपान्तरं रूपविशेषः। तत्परिमाणतावन्मात्रकालस्वर**तदन्तरालोभयभेदकल्पित**रवरस्य षड्जादे**स्तदन्तरालस्य** स्वरान्तर्भागस्य **चोभययोर्भे**दस्तेन **कल्पिता** स्वरांशभूतेत्यर्थः।। तदुक्तम्–

सूचीमुखेनाष्टसरोजपात्रे
संवेद्यकालस्त्रुटिसंज्ञकः स्यात्।
तत्कालरुद्धः श्रवणोपशल्यं
**स्वरांशमाद्यं श्रुतिमाहुरार्याः।। इति यथा**
पवनाघट्टनात्तन्त्र्याः यः समुत्पद्यते ध्वनिः।
श्रवणप्रीतिहेतुः सा श्रुतिरित्यभिधीयते।। इति। **द्वाविंशतिविधेति।।** यथा—
**मन्दमध्यमताराख्यस्थानभेदेन** सा **श्रुतिः**।
स्यादेकैकस्वरस्थाने त्रिविधेत्येकविंशतिः।।
कृत्रिमा सहजा ऽप्येका द्वाविंशतिरुदीरिता।। इति।

**आदिग्रहणेन जात्यंशकेत्यादि**"नादश्रुतिस्वरग्राममूर्च्छनातानसङ्गमात्। अष्टादश समुद्भूता"

[1] (कौ) (नि) ०वैशद्य-( V.L. वैशारद्य)सौन्दर्यकाव्यनिर्माणक्षमत्वम्। अत्रत्यः शुद्धतरः पाठः जोधपुरपाण्डुलिप्यां, सोमेश्वरस्य काव्यप्रकाशसंकेते चोपलभ्यते. [2]क.ख.ग.घ.ङ.च.(नि) (का) वैलक्षण्यमात्रकारि. [3](का) तत्परिमाणानाम्. [4]क.ख.(नि) (का) आदिशब्देन.

फलपर्यन्तता लक्ष्यते॥ **एवमिति॥** स्वरूप[1]विषयभेदेन भिन्नसामग्रीज्ञेयत्वेन चेत्यर्थः। प्रत्यभिज्ञेयावित्यर्हार्थे कृत्यः; सर्वो हि तथा यतते इतीयता प्राधान्येन[2] लोकसिद्धत्वं

I.8 प्रमाणमुक्तम्। नियोगार्थेन च कृत्येन शिक्षाक्रम उक्तः। **प्रत्यभिज्ञेयशब्देनेदमाह**— "काव्यं तु जातु जायेत कस्यचित् प्रतिभावतः" इति नयेन यद्यपि स्वयमस्यैतत् परिस्फुरति तथापीदमित्थमिति विशेषतो निरूप्यमाणं सहस्रशाखीभवति। यथोक्तमस्मत्परमगुरुभिः श्रीमदुत्पल[3]पादैः—

"तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके
कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा।
लोकस्यैष तथानवेक्षितगुणस्यात्मापि[4] विश्वेश्वरो
नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥"

इति। तेन ज्ञातस्यापि विशेषतो निरूपणमनुसंधानात्मकमत्र प्रत्यभिज्ञानम्। न तु तदेवेदमित्येतावन्मात्रम् ॥ **महाकवेरिति॥** यो महाकविरहं भूयासमित्याशास्ते[5]। एवं व्यङ्ग्यस्यार्थस्य व्यञ्जकस्य शब्दस्य च प्राधान्यं वदता व्यङ्ग्यव्यञ्जकभावस्यापि प्राधान्य[6]मिति ध्वनति ध्वन्यते ध्वननमिति त्रितयमप्युपपन्नमित्युक्तम्॥

ननु प्रथमोपादीयमानत्वाद्वाच्यवाचकतद्भावस्यैव [7]प्राधान्यमित्याशङ्क्य उपायानामेव प्रथममुपादानं भवतीत्यभिप्रायेण विरुद्धोऽयं प्राधान्ये साध्ये हेतुरिति

I.9 दर्शयति— **इदानीमित्यादिना॥** आलोकनमालोकः। वनितावदनारविन्दावलोकनमित्यर्थः। तत्र[8] चोपायो दीपशिखा॥

I.10 **प्रतिपदिति** भावे क्विप्॥ **तस्य वस्तुन इति॥** व्यङ्ग्यरूपस्य सारस्येत्यर्थः। अनेन श्लोकेनात्यन्तसहृदयो यो न भवति तस्यैव स्फुटसंवेद्य[9] एष क्रमः यथा अत्यन्तशब्दवृत्तज्ञो यो न भवति तस्य पदार्थवाक्यार्थ[10]क्रमः[11]। काष्ठाप्राप्तसहृदयभावस्य तु वाक्यवृत्तकुशलस्येव सन्नपि क्रमोऽभ्यस्तानुमानाविनाभावस्मृत्यादिवदसंवेद्य इति दर्शितम्[12]॥

इति। जातिस्वरूपं कथितम्। एवमंशकादिरूपं द्रष्टव्यम्। **श्रीमदुत्पलदेवपादाः** श्रीमदीश्वरप्रत्यभिज्ञा-शास्त्रकाराः। **तैस्तैरित्यादि। विरुद्धोऽयमिति।** इह वाच्यवाचकत्वभाव प्रधानः प्रथमोपादीयमानत्वादिति

[1]क.ख. स्वरूपभेदेन विषयभेदेन. [2]क.ख.ध.(नि) (का) प्राधान्ये. [3](के) देव. [4]क.ख.(का) गुणः स्वात्मापि. [5]ङ.च. आशंसते. [6]ङ.ख.(का) 'उत्तमम्' अधिकः. [7]क.ख. 'किं न' अधिकः. [8](के) अत्र. [9]क.ख. संवेद्यक्रमः, ग.घ.ङ.च. संवेद्य एव क्रमः. तं. [10]क.ख.ग. ०वाक्यक्रमः. [11]क.ख.ग. 'प्रतिपाद्यापि दर्शयितुमाह—इदानीमित्यादिना॥' अधिकः. [12]क.ख.ग.घ.च. 'इति दर्शितम्' नास्ति.

**यथा न व्यालुप्यत इति॥** प्राधान्यादव हि तत्पर्यन्तानुसरणरणरणकत्वरिता मध्ये विश्रान्तिं न कुर्वत इति क्रमस्य सतोऽप्य[1]लक्षणं प्राधान्ये हेतुः॥

I.11 **स्वसामर्थ्यम्** आकाङ्क्षायोग्यतासंनिधयः॥ **न विभाव्यत इति॥** विशब्देन विभक्ततोक्ता। विभक्ततया न भाव्यत इत्यर्थः। अनेन विद्यमान एव क्रमो न संवेद्यत इत्युक्तम्[2]। तेन यत् स्फोटाभिप्रायेणासन्नेव क्रम इति व्याचक्षते तत् प्रत्युत विरुद्धमेव।

I.12 **वाच्यार्थविमुखात्मनाम्।** वाच्येऽर्थे विमुखो विश्रान्तिनिबन्धनं परितोषमलभमान आत्मा हृदयं येषामित्यनेन सचेतसामित्यस्यैवार्थोऽभिव्यक्तः[3]। सहृदयानामेव तर्ह्ययं महिमास्तु, [4]न काव्यस्यासौ कश्चिदतिशय इत्यत्राह[5] —**अवभासत इति॥** तेनात्र विभक्तता न भासते। न तु वाच्यस्यैव सर्वथा[6]नवभासः। अत एव तृतीयोद्योते घटप्रदीपदृष्टान्त-बलाद्व्यङ्ग्यप्रतीतिकालेऽपि वाच्यप्रतीतिर्न विघटत इति यद्वक्ष्यते तेन सह अस्य ग्रन्थस्य न विरोधः॥

**सद्भावमिति॥** सत्तां साधुभावं प्राधान्यं चेत्यर्थः। द्वयं हि प्रतिपिपादयिषितम्।[7] **प्रकृत इति॥** लक्षणे ॥**उपयोजयन्निति॥** उपयोगं गमयन्। "तमर्थम्" इति चायमुपयोगः। स्वशब्द आत्मवाची। स्वं चार्थश्च स्वार्थौ। तौ[8] गुणीकृतौ याभ्याम् यथासंख्येन **तेनार्थो**

I.13 गुणीकृतात्मा, शब्दो गुणीकृताभिधेयः॥ **तमर्थमिति॥**"सरस्वती स्वादु तदर्थवस्तु" इति यदुक्तम्। "व्यङ्क्तः[9]" इति द्विवचनेनेदमाह—यद्यप्यविवक्षितवाच्ये शब्द एव **व्यञ्जकः**,

हेतुरप्रयोजक इत्यर्थः॥ **तत्प्रतीतेः** व्यङ्ग्यप्रतीतेः। इतिशब्दो लक्षणवचन इति दर्शयति— **प्रकृत** इति लक्षणे इति।

अथ कोऽयमुपयोगः यस्येदं गमनमित्याशङ्कायामाह— **तमर्थमिति** चार्यमिति गुणीकरणं तेन व्यङ्ग्येन हि वाच्यार्थो गुणीकृतात्मा भवति। शब्दोपि गुणीकृताभिधेयो भवतीत्यर्थः।

ननु यत्रार्थ इत्यत्र लक्षणे कथं व्यङ्क्तः इति द्विवचनं घटतां यः शब्दशक्तिमूलोऽर्थशक्तिमूलो उभयशक्तिमूलश्चेति। तत्रोभयशक्तिमूले शब्दार्थयोर्द्वयोरपि समं व्यञ्जकत्वमिति युक्तं तत्र द्विवचनम्। एकतरस्य व्यञ्जकत्वे ध्वनित्वं न स्यात्। तत्र द्वयोरपि व्यापाराभावदित्याशंक्य, आह— **व्यङ्क्त इति।**

**[1]क.ख. सतोपलक्षणम्. [2]क.ख. इत्यर्थः. [3]क.ख. विभक्तः. [4]क.ख.ग. 'तु' अधिकः. [5]क.ख. इत्याशंक्याह—. [6]घ.ङ.च. वाच्यस्य सर्वथैव. [7]क.ख. (के) पूर्वं प्रकृते. [8]क.ख. 'तौ गुणीकृतौ' नास्ति. [9]क.ख. 'व्यङ्क्तः द्योतयतः' अधिकः.**

तथाप्यर्थस्यापि सहकारिता न त्रुट्यति; अन्यथा अ[1]ज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात्। विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव। विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वात्— इति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापारः। तेन यद् भट्टनायकेन द्विवचनं दूषितं तद्गजनिमीलिकयैव। "अर्थः शब्दो वा" इति तु विकल्पाभिधानं प्राधान्याभिप्रायेण। काव्यं च तद्विशेषश्चासौ, काव्यस्य वा विशेषः। काव्यग्रहणाद्गुणालङ्कारोपस्कृतशब्दार्थपृष्ठपाती ध्वनिलक्षण आत्मेत्युक्तम् । तेनै[2]तन्निरवकाशम् —श्रुतार्थापत्तावपि ध्वनिव्यवहारः स्यादिति। यच्चोक्तम्— 'चारुत्व-प्रतीतिस्तर्हि काव्यस्यात्मा स्यात्' इति तदङ्गीकुर्म एव। [3]नाम्नि खल्वयं विवाद इति। यच्चोक्तम्[4]— 'चारुणः वस्तुनः प्रतीतिर्यदि काव्यात्मा प्रत्यक्षादिप्रमाणादपि सा भवन्ती तथा स्यात्' इति, तत्र शब्दार्थमयकाव्यात्माभिधानप्रस्तावे क एष प्रसङ्ग इति न किंचिदेतत् ॥

**स इति॥** अर्थो वा[5], शब्दो वा व्यापारो वा; अर्थोऽपि वाच्यो वा ध्वनतीति; शब्दोऽप्येवम्; व्यङ्ग्यो वा ध्वन्यत इति; व्यापारो वा शब्दार्थयोर्ध्वननमिति। कारिकया तु प्राधान्येन समुदाय एव [6]काव्यरूपो मुख्यतया ध्वनिरिति प्रतिपादितम्[7] **॥ विभक्त इति॥** गुणालङ्काराणां वाच्यवाचकभावप्राणत्वात् अस्य च तदन्यव्यङ्ग्यव्यञ्जकभाव-सारत्वान्नास्य तेष्वन्तर्भाव इति। [8]अनन्यत्रभावो विषयार्थः। एवं 'तद्व्यतिरिक्तः

**द्विवचनेनेदमाहेत्यादि।** निष्कृष्टस्यार्थस्य फलमाह— **तेन यदिति। गजनिमीलिकयैव** अपर्या-लोचनयेत्यर्थः. तर्हि कथमयं विकल्प इत्यत्राह—**अर्थः शब्दो वेति।** अत्राह स्म व्यक्तिविवेककारः—"अत्र केचिद्विद्वन्मानिनो द्विवचनसमर्थनमनोरथाक्षिप्तचित्ततया वाच्यवाचकयोर्विस्मृतसुप्रसिद्धप्रतीतिक्रम-भावा..." इत्यादि, तद्भ्रान्तिमात्रमूलं न तत्त्वमित्यलमवस्तुनिर्बन्धेनेत्यन्तम्। तदसत्, उक्तनयेन द्विवचनोपपत्तेः। **श्रुतार्थापत्तावपीति।** पीनो देवदत्तो दिवा न भुङ्क्ते इति श्रुते, यद्रात्रिभोजनं प्रतीयते, न तस्य गुणालङ्कारवस्तुनः शब्दार्थपृष्ठपातित्वम्। तस्मान्न तत्र ध्वनिव्यवहार इत्यर्थः॥

पक्षान्तरमप्यनुभाष्य दूषयति— **यच्चोक्तमिति। चारुणः वस्तुनः सा भवन्ती** चारुवस्तुप्रतीतिः। भवन्ती **तथा स्यात्,** काव्यार्थः स्यात्। परिहरति— **तत्रेति।** प्रकरणबलादेव निरवकाशतया प्रतिहतोऽयं प्रसङ्ग इत्यर्थः। **अर्थो वेति।** शब्दवाच्यव्यंग्यव्यञ्जनानि चत्वार्यपि ध्वनिशब्दवाच्यानि। शब्दश्च वाच्यार्थश्च ध्वनतीति ध्वनीभवतः। **व्यङ्ग्यो ध्वन्यत** इति। व्यञ्जनं ध्वननमित्यर्थः॥

एतत्समुदायोऽपि ध्वनिरित्याह— **कारिकया त्विति। एवमिति।** एवं यत्रार्थो वाच्यविशेषो

[1]क.ख.ग. ज्ञातोऽपि. [2]क.ख. तेन नैत०. [3]क.ख.ग.'नाम्नि' नास्ति. [4]क.ख.ग. **यथोक्तम्.** [5](के) शब्दो वा. [6]क.ख.ग. **वाच्यरूपमुखतया.** [7]ग.घ. **प्रतिपादितः.** [8]क.ख.ग.घ. अन्यत्र.

कोऽयं ध्वनिः' इति निराकृतम्॥ **लक्षणकृतामेवेति॥** लक्षणकारा[1]प्रसिद्धता विरुद्धो हेतुः। तत एव हि यत्नेन लक्षणीयता।

लक्ष्ये[2] त्वप्रसिद्धत्वमसिद्धो हेतुः। यच्च[3] नृत्तगीतहास्यादिकल्पं तत् काव्यस्य[4] न किंचित्। **चित्रमिति॥** विस्मयकृद्वृत्तादि[5]वशात्, न तु सहृदयाभिलषणीयचमत्कारसाररसनिःष्यन्दमयमित्यर्थः। काव्यानुकारि[6]त्वाद्वा चित्रम्, आलेख्यमात्रत्वाद्वा, कलामात्रत्वाद्वा॥ **अग्र इति॥**

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते[7]।
द्विधा काव्ये[8] ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥"

इति तृतीयोद्द्योते वक्ष्यते। परिकरार्थं कारिकार्थस्याधिकावापं कर्तुं श्लोकः परिकरश्लोकः॥ **यत्रेति॥** अलङ्कारे ॥ **वैशद्येनेति॥** चारुतया स्फुटतया चेत्यर्थः॥ **अभिहितमिति॥**

वेत्यादिना कथितेन प्रकारेण प्रथमाभाववादे यत् तद्व्यतिरिक्तं **को ऽयं ध्वनिर्नामेत्युक्तं** तन्निराकृतमिति यावत्।

अथ विवरणकारो द्वितीयाभाववादभागमनुभाषते दूषयितुं, **यदप्युक्तमिति**। यत्र यद्ध्वनेरप्रसिद्धत्वमुक्तं तत्किं लक्षणकारविषयं वा लक्ष्यविषयं वेति विकल्पं हृदि निधायाद्यं कल्पं दूषयति— **लक्षणकाराप्रसिद्धता विरुद्धो हेतुरिति।** 'अयं ध्वनिर्न लक्षणीयः' लक्षणकाराप्रसिद्धत्वादिति हेतुर्विरुद्धः। विपक्षे ऽपि वर्तमानत्वादित्यर्थः।

तदेवाह— **तत एवेति।** लक्षणकाराणामप्रसिद्धत्वादेवास्माभिर्ध्वनिर्लक्ष्यत इत्यर्थः। द्वितीयं पक्षं दूषयति— **लक्ष्ये त्विति।**

ध्वनिर्न लक्षणीयः। लक्ष्याप्रसिद्धत्वादिति हेतुः। घटो नित्यः अकृतकत्वादितिवत् असिद्ध इति यावत्। ननु 'स्निग्धश्यामलकान्तिलिप्तवियतः' **इत्यादिलक्ष्ये** श्रूयमाणे न तत्र किञ्चिन्नृत्तं गीतं वा उपलभ्यते, तस्य तु रङ्गप्रयोगे तद्विरुद्ध्यते। एवं ध्वन्यर्थो ऽपि लक्ष्ये नास्त्येव। त्वया तु सङ्घर्षे लक्ष्यते इत्याशंक्याह— **यच्चेति।** गीतादिर्लक्ष्ये ऽप्रसिद्धः नायं ध्वनिरित्यर्थः।

**स एवेति। स ध्वन्यर्थ एवानन्दकारि काव्यतत्वमिति यावत्।** अनेन लक्ष्ये प्रसिद्धो ऽयं ध्वनिरिति दर्शितम्। **ततो ऽन्यदिति।** ध्वनेरन्यदित्यर्थः। **चित्रशब्दप्रवृत्तिनिमित्तमाह— विस्मयकृदित्यादिना। अधिकावापं कर्तुं** परिपोषं कर्तुमित्यर्थः। ननु चित्रकाव्यान्न पृथक् ध्वनिकाव्यं स्यात्। चित्रस्वरूपैरलङ्कारैरेव ध्वनेराक्षिप्तत्वात्। यत्र क्वचिदस्य दुर्लक्ष्यतास्तु कामं तत्र, मा भूदेष दोषः। यत्र पुनः सुलक्षः तत्रालङ्कारे ऽसावन्तर्भूतः स्यात्, इत्याशङ्कापरिहाराय कारिकायां **उपसर्जनीकृतस्वार्थाविति** पदमित्याह वृत्तिकारः॥

[1]क.ख.ग. ०काराप्रसि०. [2]क.ख.ग. लक्ष्यत्व. [3]क.ख.ग.ङ.च. 'न च.' [4]क.ख.ग. 'वा क्वापि' अधिकः. [5]क.ख. वृत्यादि. [6]ग.ङ.च. ०कारकारि०. [7]क.ख.ग.घ.ङ.च. व्यवस्थितम्. [8]क.ख.घ.ङ.च. काव्यं ततो.

भूतप्रयोगः आदौ "व्यङ्क्तः" इत्यस्य व्याख्यातत्वात्।। **गुणीकृतात्मेति।।** आत्मेत्यनेन स्वशब्दस्यार्थो व्याख्यातः ।। **न चैतादिति।।** व्यङ्ग्यस्य[1] प्राधान्यम्। प्राधान्य च ज्ञप्तौ यद्यपि न चकास्ति "बुद्धौ तत्वावभासिन्याम्" इति तु[2] नयेन अखण्डचर्वणा[3] विश्रान्तेः, तथापि विवेचकैर्जीवितान्वेषणे क्रियमाणे यदा व्यङ्ग्योऽर्थः पुनरपि वाच्यमेव अनुप्राणयन्नास्ते तदा तदुपकरणत्वादेव तस्यालङ्कारता, यतो वाच्यादेव तदुपस्कृताच्चमत्कारलाभ इति। यद्यपि पर्यन्ते रसध्वनिरस्ति तथापि मध्यमकक्ष्यानिविष्टोऽसौ व्यङ्ग्योऽर्थो न रसोन्मुखीभवति स्वातन्त्र्येण, अपि तु वाच्यमेवार्थं संस्कर्तुं धावतीति गुणीभूतव्यङ्ग्यतोक्ता[4]।

"यत्रोक्ते[5] गम्यतेऽन्योऽर्थस्तत्समानैर्विशेषणैः।

सा समासोक्तिरुदिता संक्षिप्तार्थतया यथा ।।"

इति। अत्र समासोक्तेर्लक्षणं स्वरूपं[6] हेतुर्नाम तन्निर्वचनमिति पादचतुष्टयेन क्रमादुक्तम् । उपोढो[7] रागः सान्ध्योऽरुणिमा प्रेम च येन। विलोलास्तारका ज्योतींषि नेत्रत्रिभागाश्च यत्र।। **तथेति।।** झटित्येव प्रेमरभसेन च गृहीतमाभासितं परिचुम्बितुमाक्रान्तं च। निशाया मुखं प्रारम्भो वदनकोकनदं च[8]। **यथेति।।** झटिति ग्रहणेन प्रेमरभसेन च। तिमिरं चांशुकाश्च सूक्ष्मा अंशवः तिमिरांशुकं रश्मिशबलीकृतं तमःपटलम्, तिमिरांशुकं नीलजालिका नवोढाप्रौढवधूचिता। रागात् रक्तत्वात् सन्ध्याकृतादनन्तरम्, प्रेमरूपाच्च हेतोः। पुरोऽपि पूर्वस्यां दिशि अग्रे च। गलितं प्रशान्तं पतितं च। तया रात्र्या करणभूतया; समस्तं मिश्रितं उपलक्षणत्वेन वा। न लक्षितं रात्रिप्रारम्भोऽसाविति न ज्ञातम्। तिमिरशबलितांशुदर्शने हि रात्रिमुखमिति लोकेन लक्ष्यते, न तु स्फुटे आलोके।

**ननु यत्रेति। व्यङ्ग्यप्राधान्यमिति।** ननु व्यंग्यस्य प्राधान्यं प्रतीतावस्फुरत् कथं गृह्यत इत्याशङ्कते–**प्राधान्यं चेति।** तत्र हेतुमाह– **बुद्धाविति।** परिहरति–**तथापीति विवेचकैः** सहृदयैः। **तदुपस्कृतात्।** व्यङ्ग्योपस्कृतात्। **मध्यमकक्ष्येति।** समासोक्त्यादौ प्रथमं वाच्यकक्ष्या। ततो वस्तुव्यङ्ग्यकक्ष्या। पुनस्तृतीया रसध्वनिकक्ष्येत्यस्ति कक्ष्यात्रयविभागः। **यत्रोक्त** इति भामहलक्षणम्। **तस्य** पादचतुष्टयविधेयभेदं प्रदर्शयति–**उपोढ** इत्यादि।

तिमिरांशुकमित्यत्र रूपकपरिग्रहे विशेषणातुल्यत्वात् समासोक्तिभंगप्रसंग इत्याशयेनाह– **तिमिरश्चांशुकश्चेति। नीलजालिका** नीलवसनम्। **नवेति।।** नवोढा च सा प्रौढा चेति कर्मधारयः।

["विवाचकैः सहृदयैः तनूपस्मृतव्यंग्यो वस्तुतारं मध्यमकक्ष्या। समासोक्त्यादौ प्रथमं वाच्यकक्ष्या ततो वस्तुव्यंग्यकक्ष्या पुनस्तृतीया सा ध्वनिकक्ष्येत्यस्तु कक्ष्यात्रयविभागः" ]*

रात्रिप्रारम्भाज्ञानं समर्थयति **तिमिरेति।** व्यवच्छेदमाह– **न तुस्फुटे आलोके इति।** पश्चाद्गतेन

[1]ङ. व्यंग्यप्राधान्यम्. [2]क.ख. 'तु' नास्ति. [3]क.ख.ग. चर्वण [4]क.ख.ग. 'समासोक्ताविति' अधिकः. [5]क.ख. यत्रोक्तौ. [6]क.ख.ग. स्वरूप, घ.ङ.च. स्वरूपे. [7](के) 'वृतो' अधिकः. [8]क.ख.ग.(का) चेति.

नायिकापक्षे तु—तयेति कर्तृपदम्। रात्रिपक्षे तु अपिशब्दः लक्षितमित्यस्यानन्तरः। अत्र च नायकेन पश्चाद्गतेन चुम्बनोपक्रमे पुरो नीलांशुकस्य गलनं पतनम् । यदि वा पुरोऽग्रे नायकेन तथा गृहीतं मुखमिति संबन्धः। तेनात्र व्यङ्ग्ये प्रतीतेऽपि न प्राधान्यम्। तथा[1]हि—नायिकानायकव्यवहारो निशाशशिनावेव शृङ्गारविभावरूपेण संस्कुर्वाणोऽलङ्कारतां भजते, ततस्तु वाच्याद्विभावीभूताद्रसनिःष्यन्दः[2]।। यस्तु व्याचष्टे— "तया निशयेति कर्तृपदम्। न चाचेतनायाः कर्तृत्वमुपपन्नमिति शब्दे[3]नैव नायकव्यवहार उन्नीतोऽभिधेय एव, न व्यङ्ग्य इति; अत एव समासेनोक्तिः[4]" इति सः प्रकृतमेव[5] ग्रन्थार्थमत्यजत् "व्यङ्ग्येनानुगतम्" इति। एकदेशविवर्ति चेत्थं रूपकं स्यात्, "राजहंसैरवीज्यन्त शरदैव सरोनृपाः" इतिवत्; न तु समासोक्तिः, तुल्यविशेषणा[6]भावात् 'गम्यते' इति चानेनाभिधाव्यापारनिरासात्— इत्यलमवान्तरेण बहुना। नायिकाया नायके यो व्यवहारः स निशायां समारोपितः, नायिकायां नायकस्य यो व्यवहारः स च शशिनि समारोपित इति व्याख्याने नैक[7]शेषप्रसङ्गः।। **आक्षेप इति।।**

"प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः।।"

**पश्चाद्**भागगतेन। तेनेति। यत एवं नायकव्यवहारस्य कथञ्चिद्योजना, तेनेत्यर्थः।।

**शृङ्गारविभावरूपेण** शृङ्गारस्योद्दीपनविभावेन। रसनिष्यन्दः रसास्वादः। व्याख्यानान्तरमनुभाषते-**यस्त्विति। शब्देनैव।** निशयेति शब्देनैव शशिशब्देनैव च **नायकव्यवहारः** नायकयोर्व्यवहारः **उन्नीतः** ऊहितः।**अभिधेय एवेति।** अन्यथा रागो रागस्तारकास्तारकाः मुखं मुखं तिमिरमंशुकमित्यादि न घटते। अतो न व्यङ्ग्यो नायकव्यवहार इति यावत्।

अत एवेयं समाख्यापि संगच्छत इत्याह। **अत इति।** समासेन संक्षेपेण। परिहरति **सः प्रकृतमिति।** प्रकृतार्थमुद्घाटयति— **व्यङ्ग्येनानुगतमिति** व्याख्येयप्रमुखपतितमिति शेषः।

किञ्चैवमभिधेयतायां इयं समासोक्तिरेव न स्यादित्याह— **एकदेशेति।** तत्र उदाहरणं दर्शयति —**राजहंसैरिति।** लक्षणविरोधमपि प्रकटयति— **गम्यत इति चेति।** अथ नायिकानायकेत्यत्र कथमेकशेषाभावः इत्याशंकायामाह— **नायिकाया** इति।

एवं समासोक्तौ वाच्यस्य प्राधान्यात् व्यङ्ग्यस्य तदनुगामितया ध्वनित्वाभावं प्रसाध्य क्रमप्राप्ते आक्षेपेऽप्ययमेव प्रकार इत्युपक्रमते वृत्तिकारः। **आक्षेपेऽपीति।** व्यङ्ग्यविशेषाक्षेपिणः व्यंग्यविशेषाकार्षिणः प्राधान्येन वाक्यार्थत्वादित्यर्थः।

अथ कथमयं वाच्य एवात्र वाक्यार्थ इति ज्ञायते? अत्राह— **वाक्यार्थ** इति। सामर्थ्यज्ञेयत्वमुपज्ञेयत्वमुपपादयति। **तथा हीति। प्रतिषेधरूप इति।** नाकर्षणरूप इति यावत्।

[1](के) ततो. [2]क.ख.ग.(नि) निःष्यन्दः. [3]क.ख.ग.ङ.(का) ०नैवात्र, (कौ) ०नात्र. [4]क.ख.ग.(नि) (का) समासोक्तिः. [5]क.ख.ग.(नि) प्रकृतार्थमेव. [6]घ. (के) विशेषणत्वा०. [7]क.ख.(नि) न कोऽपि दोष०.

तत्राद्यो यथा–

"अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते ॥"

इति वक्ष्यमाणमरणविषयो निषेधात्माक्षेपः। तत्र 'इयदस्तु' इत्येतदेव अत्र 'प्रिये' इत्याक्षिपत्[1] चारुत्वनिबन्धनमित्याक्षेप्येणाक्षेपकमलंकृतं सत् प्रधानम्। उक्तविषयस्तु यथा ममैव–

"भो भोः किं किमकाण्ड एव पतितस्त्वं पान्थ कान्या गति-
स्तत्तादृक्तृषितस्य मे खलमतिः सोऽयं जलं गूहते।
अस्थानोपनतामकालसुलभां तृष्णां प्रति क्रुध्य भो-
स्त्रैलोक्यप्रथितप्रभावमहिमा मार्गः पुनर्मारवः ॥"

अत्र कश्चित् सेवकः प्राप्तः प्राप्तव्यमस्मात् किमिति न लभे इति प्रत्याशाविशस्यमानहृदयः केनचिदमुनाक्षेपेण[2] प्रतिबोध्यते। तत्राक्षेपेण निषेधरूपेण वाच्यस्यैवासत्पुरुषसेवातद्वैफल्यतत्कृतोद्वेगात्मनः शान्तरसस्थायिभूतनिर्वेदविभावा-नुभावरूपतया चमत्कृति[3]दायित्वम्। वामनस्य तु "उपमानाक्षेपः" इत्याक्षेपलक्षणम्। उपमानस्य चन्द्रादेराक्षेपः। 'अस्मिन् सति किं त्वया कृत्यम्[4]' इति। यथा–

"तस्यास्तन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ यदि च ते किं नाम नीलोत्पलैः।
किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे
ही धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥"

अत्र व्यङ्ग्योऽप्युपमार्थो [5]वाच्यस्यैवोपस्कुरुते। किं तेन कृत्यमिति त्वपहस्तनारूप

आक्षिपत् आकर्षत्। अथ व्याख्याकारः आक्षेपलक्षणमाह– **प्रतिषेध इवेति।** एतदपि भामहलक्षणम्। **प्रिय इत्याक्षिपदिति।** प्रिये इत्येवं रूपमर्थं आकर्षदिति यावत्।

आक्षेप्येण प्रिय इत्यर्थेन व्यङ्ग्येनेत्यर्थः। आक्षेपकं वाच्यम्। इयदेवास्त्वित्येवंरूपम्। भो भो इति –**पतितः** व्यापारेण परिश्रान्तः। **गूहते** निह्नुते। **क्रुध्य**-क्रोधं कुरु। **प्राप्तव्यं** प्राप्तुं योग्यम्। **अस्मात्** सेव्यमानात् **वाच्यस्यैव** प्रतिपाद्यस्यैव। न त्वभिधीयमानस्य पान्थजलतृष्णामरुमार्गरूपस्येत्यर्थः।

अन्यथाऽस्याप्रस्तुतप्रशंसात्वप्रसंगः, असंगतिश्च स्यात्। वामनेनाक्षेपस्यान्यथा लक्षणं कृतमित्याह– **वामनस्येति।** आक्षेपः प्रतिषेधो वाच्यस्यैवो**पस्कुरुते** वाच्यमेवालङ्कुरुत इति यावत्।

[1] घ.ङ.च. इत्याक्षेपकं. [2]क.ख.ग.(नि) विडम्बनाक्षेपेण. [3]क.ख.ग.(नि) 'दायि' नास्ति.
[4]क.ख.ग.(नि) कृतम्. [5](कं) वाच्यमेव.

आक्षेपो वाच्य एव चमत्कारकारणम्। **यदि वोपमानस्याक्षेपः सामर्थ्यादाकर्षणम्। यथा**--

"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं [1]करोति॥"

[2]ईर्ष्याकलुषितनायकान्तरमुपमानमत्राक्षिप्त**मपि** वाच्यार्थमेव अलङ्करोतीति। एषा तु समासोक्तिरेव। तदाह— **चारुत्वोत्कर्षेति॥ अत्रैव प्रसिद्धं** दृष्टान्तमाह— **अनुरागवतीति॥** तेनाक्षेपप्रमेयसमर्थनमेवापरिसमाप्तमिति मन्तव्यम्। तत्र तूदाहरणत्वेन समासोक्तिश्लोकः पठितः "अहो दैवगतिः [3]कीदृक्" इति। गुरुपारतन्त्र्यादिनिमित्त[4]कोऽसमागम इत्यर्थः॥ **तस्यैवेति॥** वाच्यस्यैवेति यावत्। वामनाभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण समासोक्ति-रित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोर्युक्त्येदमेकमेवोदाहरणं व्यतरद्ग्रन्थकृत्। [5]एवं हि समासोक्तिर्वास्तु आक्षेपो वा ; किमनेनास्माकम्[6]? समासोक्त्यादिषु[7] सर्वथालङ्कारेषु[8] व्यङ्ग्यं वाच्ये गुणीभवतीति नः साध्यम्— इत्याशयोऽत्र ग्रन्थे गुरुभिर्निरूपितः॥

एवं प्राधान्यविवक्षायां दृष्टान्तमुक्त्वा व्यपदेशोऽपि प्राधान्यकृत एव भवतीत्यत्र दृष्टान्तं स्वपरप्रसिद्धमाह— **यथा चेति॥ उपमाया इति॥** उपमानोपमेयभावस्येत्यर्थः॥ **तयेति॥** उपमया। दीपके हि "आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते" इति लक्षणम्।

"मणिः शाणोल्लीढः समरविजयी हेतिदलितः[9]।
कलाशेषश्चन्द्रः सुरतमृदिता बालललना।
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः[10]।"

इत्यत्र दीपनकृतमेव चारुत्वम्।

अपहस्तना निरसनम्, प्रकृतस्य लक्षणस्यार्थान्तरं दर्शयति— **यदि वेति। एषा त्विति।** यदीदमुदाहरणं वामनमते आक्षेपत्वेनोक्तं, तदेतत् भामहमते समासोक्तिर्भवति। नायकार्थस्य गम्यमानत्वादिति। **तदाहेति**— तदेतद् व्यङ्ग्याक्षेपिणो वाच्यचमत्कृतिदायित्वात् प्राधान्यं तदिति यावत्। **तेनेति** दृष्टान्त-प्रदर्शनेन दाष्ट्रान्तिकसमर्थकेनेति यावत्। दार्ष्टान्तिकं चात्राक्षेपप्रमेयमित्यर्थः।

**उदाहरणत्वेन** दृष्टान्तत्वेन। **वामनाभिप्रायेणेति।** उपमानप्रत्यायनपक्षरूपेण, **भामहाभिप्रायेण।** नायकप्रतीयमानताश्रयेण। **गुरुभिर्निरूपित इति।** प्रामाण्यमुक्तम्। दीपके तावदुपमाव्यपदेशस्योप-पत्तिमुपपादयति— **तथा हीति।**

**आदिमध्यान्तेत्येतदपि** भामहलक्षणम्। **दीपनकृतमेवेति** नोपमानोपमेयभावकृतम्। अतो दीपकमिति

[1]क.ख.ग.ङ.(नि)(का) चकार. [2]क.ख.ग.(नि)(का) 'इत्यत्र' अधिकः. [3]घ.ङ.च.(का)(के) 'कीदृक्' नास्ति. [4]क.ख.ग.(नि)(का) निमित्तो. [5]क.ख.(का) एषापि. [6](के) किमस्माकमनेन. [7]क.ख.(का) 'समासोक्त्यादिषु' नास्ति. [8]क.ख.(नि) अलंकारादिषु, ग. सिद्धालंकारेषु. [9](के) निहितः. निहतः (जोधपुर). [10]ग.घ.ङ.च. नराः.

"अपह्नुतिरभीष्टस्य किंचिदन्त[1]र्गतोपमा" इति।

**तत्रापह्नवेनैव** शोभा–

"नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥"

इति। एवमाक्षेपं विचार्योद्देशक्रमेणैव प्रमेयान्तरमाह-- **अनुक्तनिमित्तायाम[2]पीति॥**

"एकदेशस्य विगमे या गुणान्तरसंस्तुतिः।
विशेषप्रथनायासौ विशेषोक्तिरिति स्मृता ॥"

यथा–

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥"

इयं चाचिन्त्यनिमित्तेति नास्यां व्यङ्ग्यस्य सद्भावः। उक्तनिमित्तायामपि वस्तुस्वभावमात्रत्वे पर्यवसानमिति तत्रापि न व्यङ्ग्यसद्भावाशङ्का[3]। यथा–

"कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥"

तेन प्रकारद्वयमवधीर्य[4] तृतीय प्रकारमाशङ्कते-- "अनुक्तनिमित्तायामपि" इति॥ **व्यङ्ग्यस्येति॥** "शीतकृता खल्वार्तिरत्र निमित्तम्" इति भट्टोद्भटः; तदभिप्रायेणाह-- **न त्वत्र काचिच्चारुत्वनिष्पत्तिरिति॥** यत्तु रसिकैरपि निमित्तं [5]परिकल्पितम्– '[6]कान्तासमागमे गमनादपि लघुतरमुपायं[7] स्वप्नं मन्यमानो निद्रागमनबुद्ध्या संकोच

व्यपदेशो नोपमेत्यर्थः॥ **अपह्नुतिरित्यपि।** भामहीयम्। **नेयमिति।** अत्राप्यपह्नवस्यैव चारुत्वं नोपमानोपमेयस्येति भावः॥

**एकदेशस्येत्यपि** भामहीयम्। विशेषोक्तिस्त्रिधा-- अचिन्त्यनिमित्ता, उक्तनिमित्ता, अनुक्तनिमित्ता चेति। तत्राद्यभेदयोः व्यंग्यं नास्त्येव। तृतीये त्वस्ति। तदेतत् प्रकाशयति– **यथेति। शीतकृतेति।** अत्र "आहूतोऽपि" इत्युदाहरणोक्तसङ्कोचाशिथिलनेत्यर्थः। **अपि त्विति।** अभिव्यज्यमानं स्वप्नोपायमननं न

[1]क.ख.(नि) अर्थगतोपमा. [2]क.ख.(का) 'अपि' नास्ति. [3]क.ख.ग.(का) ०भावशंका. [4]क.ख.ग.(नि) अवधार्य. [5]क.ख.ग.(नि)(का) 'परि' नास्ति. [6](के) स्वप्नोपनत. [7](के) तत्समागमे.

नात्यजत्' इति तदपि निमित्तं चारुत्वहेतुतया नालंकारविद्भिः[1] कल्पितम्; अपि तु विशेषोक्तिभाग एव न शिथिलयतीत्येवंभूतोऽभिव्यज्यमाननिमित्तोपस्कृतश्चारुत्वहेतुः। अन्यथा तु विशेषोक्तिरेवेयं न भवेत्। एवमभिप्रायद्वयमपि साधारणोक्त्या ग्रन्थकृत् न्यरूपयत्, न त्वौद्भटेनैवाभिप्रायेण ग्रन्थो व्यवस्थित इति मन्तव्यम्॥ **पर्यायोक्तेऽपीति॥**

"पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥"

इति लक्षणम्।

"शत्रुच्छेददृढेच्छस्य मुनेरुत्पथगामिनः।
रामस्यानेन धनुषा देशिता धर्मदेशना॥"

इत्यत्र भीष्मस्य भार्गवप्रभावाभिभावी प्रभाव इति यद्यपि प्रतीयते, तथापि तत्सहायेन "देशिता धर्मदेशना" इत्यभिधीयमानेनैव [2]काव्यार्थोऽलंकृतः। अत एव पर्यायेण प्रकारान्तरेणावगमात्मना व्यङ्ग्येनोपलक्षितं सद्यदभिधीयते तदभिधीयमानम् उक्तमेव सत् पर्यायोक्तमिति— अभिधीयत इति लक्षणपदम्, पर्यायोक्तमिति लक्ष्यपदम्, अर्थालङ्कारत्वं सामान्यलक्षणमिति— सर्वं युज्यते। यदि तु 'अभिधीयते' इत्यस्य बलाद्व्याख्यानम्— अभिधीयते प्रतीयते प्रधानतयेति, उदाहरणं च "भम धम्मिअ" इत्यादि, तदालङ्कारत्वमेव दूरे संपन्नम्, आत्मतायां पर्यवसानात्। तदा चालङ्कारमध्ये गणना न कार्या, भेदान्तराणि चास्य वक्तव्यानि। तदाह— **यदि प्राधान्येनेति॥ ध्वनाविति॥** आत्मन्यन्तर्भावादात्मैवासौ नालङ्कारः स्यादित्यर्थः॥ **तत्रेति॥** यादृशोऽलङ्कारत्वेन विवक्षितस्तादृशे ध्वनिर्नान्तर्भवति। न तादृगस्माभिर्ध्वनिरुक्तः। ध्वनिर्हि[3] सर्वत्रभावाद्व्यापकः समस्तप्रतिष्ठास्थानत्वाच्चाङ्गी; न चालङ्कारो व्यापकोऽन्यालंकारवत्; न चाङ्गी अलंकार्यतन्त्रत्वात्। अथ व्यापकत्वाङ्गित्वे तस्योपगम्येते, त्यज्यते चालङ्कारता, तर्ह्यस्मन्नय

शिथिलयतीति रूपो विशेषोक्तिभाग एवालङ्कारविद्भिश्चारुत्वे हेतुः कल्पित इति यावत्।

निमित्तस्य चारुता चेत् कथं विशेषोक्तिः स्यादित्याह— **अन्यथेति। पर्यायोक्तमिति।** भट्टोद्भटस्य लक्षणमिदम्। पर्यायेण प्रकारान्तरेणोक्तं पर्यायोक्तम्। **शत्रुच्छेदेति।** अनेन कर्त्रा भीष्मेण धनुषा करणेन धर्मदेशना धर्मोपदेशः। अत्रापि वाच्यमेव प्रधानमिति दर्शयति— **अत्रेति।** उक्तादेव हेतोः लक्षणत्रयमप्युपपन्नमित्याह— **अत एवेति॥** पक्षान्तरमाशंकते—**यदिति।** प्रकृतस्य लक्षणवाक्यस्य व्याख्यानविशेषेणार्थान्तरं परिकल्प्य उदाहरणान्तरमप्येवं कल्प्यते चेदित्यर्थः। तर्हि अमतं न सिद्ध्येदिति तावदाह—

**तदिति।** अनिष्टान्तरमपि दर्शयति— **तदा चेति। अथेति।** पर्यायोक्तमित्ययमलङ्कारः। व्यापकश्चाङ्गी

[1]क.ख.ग.(के) ०कृद्भिः. [2]क.ख.(नि) वाक्यार्थो. [3]क.ख.ग.(का) 'महाविषयः' अधिकः.

एवायमवलम्ब्यते। केवलं मात्सर्यग्रहात् पर्यायोक्तवाचीति[1] भावः। न चेयदपि प्राक्तनैर्दृष्टम्, अपि त्वस्माभिरेवोन्मीलितमिति दर्शयति— **न पुनरिति॥** भामहस्य यादृक्तदीयं रूपमभिमतं तादृगुदाहरणेन दर्शितम्; [2]तत्रापि नैव व्यङ्ग्यस्य प्राधान्यं चारुत्वाहेतुत्वात्; तेन तदनुसारितया तत्सदृशं यदुदाहरणान्तरमपि कल्प्यते तत्र नैव व्यङ्ग्यस्य प्राधान्यमिति सङ्गतिः। यदि तु तदुक्तमुदाहरणमनादृत्य "भम धम्मिअ" इत्याद्युदाह्रियते, तदस्मच्छिष्यतैव। केवलं तु [3]भयम-वलम्ब्यापश्रवणेनात्मसंस्कार इत्यनार्यचेष्टितम्। यदाहुरैतिहासिकाः— "अवज्ञयाप्यपच्छाद्य शृण्वन्नरकमृच्छति[4]" इति। भामहेन ह्युदाहृतम्—

"गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः[5]।
विप्रा न भुञ्जते................. ॥" इति।

एतद्धि भगवद्वासुदेववचनं पर्यायेण रसदानं निषेधति। यत्स एवाह—

........"तच्च रसदाननिवृत्तये" इति। न चास्य रसदाननिषेधस्य व्यङ्ग्यस्य किंचिच्चारुत्वमस्ति येन प्राधान्यं शङ्क्येत। अपि तु तद्व्यङ्ग्योपोद्बलितं विप्रभोजनेन विना यन्न भोजनं तदेव उक्तप्रकारेण पर्यायोक्तं सत् प्राकरणिकं भोजनार्थमलंकुरुते; न ह्यस्य निर्विषं भोजनं भवत्विति विवक्षितमिति पर्यायोक्तमलंकार एव[6] चिरन्तनानामभिमत इति तात्पर्यम्॥ **अपह्नुतिदीपकयोरिति॥** एतत्पूर्वमेव निर्णीतम्, अत एवाह— **प्रसिद्धमिति॥** प्रतीतं प्रसाधितं **प्रामाणिकं** [7]चेत्यर्थः। पूर्वं चैतत् '[8]उपमादिव्यपदेश[9]भाजनमेव तद्यथा न भवति' इत्यमुया

**चेत्यभ्युपगम्यत** इति चेदित्यर्थः। इयदेव तावत् पर्यायोक्ते व्यंग्यप्राधान्यं गम्यत इत्यर्थः। ततस्तत्सदृशस्योदाहरणान्तरस्य प्रकल्पने तथा न व्यङ्ग्यस्य प्राधान्यमिति यावत्—पक्षान्तरमाशंक्य परिहरति—**यदि त्विति॥** किं तद्भामहोदाहृतमित्याह— **भाम्हेन हीति। रसदानं निषेधतीति।** विषदानं निषेधतीति यावत्, स एव भामह एव रसदाननिषेधस्य रसं न दद्यादिति रूपस्य, **उपोद्बलित**मुपस्कृतं। **तदेवेति।** वाच्यरूपमिति यावत्। **न ह्यस्येति** एवं भूतं वाच्यमेवात्र प्राधान्येन विवक्षितं, न तु व्यंग्यं विषं न देयमिति। यदि तु निर्विषं भोजनं भवत्विति विवक्षितं स्यात्, तर्हि व्यंग्यं प्रधानं स्यात्। न चैवम्। तस्माद्वाच्यमेवात्र प्रधानम् इत्यर्थः।

प्रकृतमुपसहरति— **पर्यायोक्तमिति।** अतः **पर्यायोक्तमलङ्कार** एव नालङ्कार्यमिति भामहादीनां चिरन्तनानां सिद्धान्त इत्यर्थः। **अपह्नुतीति** अपह्नुतिदीपकयोर्व्यंग्यानुगतस्य वाच्यस्य प्राधान्यं पूर्वमेव यथा दीपकापह्नुत्यादाविति ग्रन्थव्याख्याने एव, निर्णीतमिति यावत्। ननु अत्रापह्नुति-दीपकयोरित्यादिकमेतत् किमर्थमुक्तम्? उक्तः खलु पूर्वमयमेवार्थो यथा दीपकापह्नुत्यादिनेत्याशंकायां आह—**पूर्वं चैतदिति।**

[1]क.ख.ग.(नि) ०भागिति. [2]क.ख.(के) तत्रच. [3](के) 'नयगन' इत्येव पाठः. [4](के) मार्छ. [5]क.ख.ग. ०तिनौ. [6]क.ख.ग.(का) एवेति. [7]क.ख.(के) 'प्रामाणिकं' नास्ति. [8]घ.(के) उपमान०. [9]क.ख.ग.(के) 'एव' नास्ति। 'भाजनमेतद्यथा' इत्येव पाठः.

छायया दृष्टान्ततयोक्तमपि, उद्देश[1]क्रमपूरणाय ग्रन्थशय्यां योजयितुं पुनरप्युक्तम् 'व्यङ्ग्य[2]प्राधान्याभावान्न ध्वनिः' इति छायान्तरेण। वस्तु पुनरेकमेव। उपमाया एव व्यङ्ग्यत्वेन ध्वनित्वाशङ्कनात्। यत्तु विवरणकृत् "दीपकस्य सर्वत्रोपमान्वयो [3]नास्ति" इति बहुनोदाहरण[4]प्रपञ्चेन विचारितवान्, तदनुपयोगि निस्सारं सप्रतिक्षेपं च॥

"मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम्[5] ।
स प्रियासङ्गमोत्कण्ठां सासह्यां मनसः शुचम् ॥"

इति। अत्राप्युत्तरोत्तरजन्यत्वेऽप्युपमानोपमेयभावस्य सुकल्पत्वात्। नहि क्रमिकाणां नोपमानोपमेयभावः। तथा हि–

"राम इव दशरथोऽभूद्दशरथ इव रघुराजोऽपि रघुसदृशः।
अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥"

इति न[6] न भवति; तस्मात् क्रमिकत्वम्, समं वा प्राकरणिकत्वमुपमां [7]रुणद्धीति कोऽयं त्रास इत्यलं गर्दभीदोहानुवर्तनेन॥

**सङ्करालङ्कारेऽपीति॥**

"विरुद्धालंक्रियोल्लेखे समं तद्वृत्त्यसम्भवे ।
एकस्य च ग्रहे न्यायदोषाभावात्[8] स संकरः॥"

इति लक्षणादेकः प्रकारः। यथा ममैव–

छाया प्रकारः। **वस्तु पुनरिति।** छायाप्रयोजनयोरेव भेदः। अर्थस्य व्यंग्यत्वेऽप्युपमाया अप्राधान्यान्न ध्वनित्वमित्येवमात्मा एक एवेत्यर्थः। **विवरणकृदिति**–ध्वनिग्रन्थस्य विवरणं कृतवान्, कश्चित् विचारितवानिति। स्वविवरणग्रन्थे इति शेषः। तन्निराकरोति **तदिति।** उपमान्वयमुदाहरणेन समर्थयति **मदो जनयतीति।** क्रमिकाणां क्रमवतां समं वेति अक्रमिकत्वमित्यर्थः। यथा– 'मणिः शाणोल्लीढः' इत्यादौ॥ **प्राकरणिकत्वं** प्राकरणिकमिति यावत्। **दोहानुवर्तनेन** दोहनानुवर्तनेन, निस्सारपरीक्षणेनेत्यर्थः।

अथ संकरालङ्कारनिरूपणम्–**संकरेति।** अत्र संकरालङ्कारश्चतुर्धा– सन्देहेन, एकवाक्यवर्तनेन, एकवाक्यांशप्रवेशेन, अनुग्राह्यानुग्राहकभावेन चेति। प्रकारश्चायं भट्टोद्भटमतेनात्रतिष्ठते। तत्रैषां क्रमेण लक्षणोदाहरणानि दर्शयति **विरुद्धेति।** यत्र विरुद्धयोरलङ्कारयोः संभवः युगपत्तयोर्वृत्त्यसंभवश्च एकपरिग्रहे

[1]ग.(के) उद्देशानुक्रम०. [2]क.ख.ग. व्यंग्यम्. [3]क.ख.ग.(के) 'न' नास्ति. [4]च.(के) उदाहरणादिप्र०. [5]घ.ङ.च.(का) ०भञ्जनम्. [6]क.ख.ग. नतु. [7]क.ख.ग.(का) निरुणद्धि. [8]ग.घ.ङ.च. ०दोषाभावे च.

"शशिवदना सितसरसिजनयना सितकुन्ददशनपङ्क्तिरियम् ।
गगनजलस्थलसम्भवहृद्याकारा कृता विधिना ॥" इति।

अत्र च[1] शशी वदनमस्याः, तद्वद्वा वदनमस्या इति। रूपकोपमोल्लेखात् युगपद्द्वयासम्भवादेकतरपक्षत्यागग्रहे[2] प्रमाणाभावात् संकर इति व्यङ्ग्यवाच्यताया एव अनिश्चयात् का ध्वनिसम्भावना? योऽपि द्वितीयः प्रकारः— 'शब्दार्थालंकाराणामेकत्र भावः' इति तत्रापि प्रतीयमानस्य का शङ्का? यथा— "स्मर स्मरमिव प्रियं स्म रमसे[3] यदालिङ्गनात्" इति। [4]तत्रैव यमकमुपमा च। तृतीयः प्रकारः— यत्रैकत्र वाक्यांशेऽनेकोऽर्थालंकारः तत्रापि द्वयोः साम्यात् कस्य व्यङ्ग्यता। यथा—

"तुल्योदयावसानत्वाद्गतेऽस्तं प्रति भास्वति ।
वासाय वासरः क्लान्तो विशतीव तमोगुहाम् ॥"

इति। अत्र हि स्वामिविपत्तिसमुचितव्रतग्रहणहेवाकिकुलपुत्रकरूपणमेकदेशविवर्तिरूपकं दर्शयति। उत्प्रेक्षा चेवशब्देनोक्ता। तदिदं प्रकारद्वयमुक्तम्।

"शब्दार्थ[5]वर्त्यलंकारा वाक्य एकत्र वर्तिनः[6]।
संकरो वैकवाक्यांशप्रवेशाद्वाभिधीयते ॥"

साधकस्य बाधकस्य वाभावः स एकः सन्देहात्मकः संकर इति यावत्। **शशीति।** तथा वक्त्रचन्द्र इत्यत्र 'वक्त्रं चन्द्र इवे'ति किमुपमा, उत 'वक्त्रमेव चन्द्र' इति रूपकमिति संशयः। उभयथापि समासस्य संभवात्। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति उपमासमासः व्याघ्रादीनामाकृतिगणत्वात्। मयूरव्यंसकादित्वात्तु रूपकसमासः मयूरव्यंसकादीनामाकृतिगणत्वात्।

एवं 'शशिवदने'त्यत्र 'शशीव वदनमस्या' इति किमुपमा, उत 'शश्येव वदनमस्या' इति रूपकमिति संशय इत्यर्थः। **व्यंग्यवाच्यताया एवानिश्चयादिति।** उपमाया वाच्यत्वे रूपकं व्यङ्ग्यं स्यात्। अन्यथा चेदन्यथा स्यात्। तत्र द्वयोरेकस्य वाच्यत्वानिर्धारणात् कुत एव ध्वनित्वसंभावनेत्यर्थः।

अथ द्वितीयं सङ्करभेदं लक्षयति— **वापीति। तत्रैव चेति।** यमकमुपमा च द्वयमपि वाच्यमेव, न किञ्चित् व्यङ्ग्यमिति कुत एव ध्वनिप्रसङ्ग इत्यर्थः। अथ तृतीयं प्रकारं विवेचयति— **तृतीय इति।**

**अत्रेति।** एकदेशविवर्तिरूपकं दर्शयति—कविरिति शेषः। रूपकोत्प्रेक्षयोर्द्वयोरपि वाच्यतया साम्यान्न कस्यचिदपि व्यङ्ग्यत्वमिति भावः। उक्तस्यास्य भेदद्वयस्य लक्षणमाह— **शब्दार्थेति॥**

[1]क.ख.ग.(का) 'च' नास्ति. [2]क.ख.(नि)(का) ०ग्रहणे. [3]ग.(नि)(का) रमयसे. [4]क.ख.ग.(नि)(का) अत्रैव. [5]ग.घ.च.(नि) ०वृत्त्यलं. [6]क.ख.(नि)(के) भाविनः.

इति[1]। चतुर्थस्तु प्रकारः यत्रानुग्राह्यानुग्राहकभावोऽलंकाराणम्। यथा–

"प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्याः ।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः॥"

अत्र मृगाङ्गनावलोकनेन तदवलोकनस्योपमा यद्यपि व्यङ्ग्या, तथापि वाच्यस्य [2]ससंदेहालंकारस्याभ्युत्थानकारिणीत्वेन अनुग्राहकत्वाद्गुणीभूता। अनुग्राह्यत्वेन हि [3]ससंदेहे पर्यवसानम्। यथोक्तम्–

"परस्परोपकारेण यत्रालंकृतयः स्थिताः ।
स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि संकरः॥" [4]इति।

तदाह– **यदालंकार इत्यादि॥** एवं चतुर्थेऽपि प्रकारे ध्वनिता निराकृता। मध्यमयोस्तु व्यङ्ग्यसंभावनैव नास्तीत्युक्तम्। आद्ये तु प्रकारे 'शशिवदना" इत्याद्युदाहृते कथंचिदस्ति संभावनेत्याशङ्क्य निराकरोति– **अलंकारद्वयेति॥ सममिति॥** द्वयोरप्यान्दोल्यमानत्वादिति भावः। ननु यत्र व्यङ्ग्यमेव प्राधान्येन भाति तत्र किं कर्तव्यम्? यथा

"होइ ण गुणाणुराओ खलाणँ णवरं पसिद्धिसरणाणम्।
किर पह्णवइ ससिमणि चन्दे ण पिआमुहे दिट्ठे ॥"

अत्रार्थान्तरन्यासस्तावद्वाच्यत्वेन [5]भाति व्यतिरेकापह्नुती तु व्यङ्ग्यत्वेन प्रधानतयेत्यभिप्रायेणाशङ्कते– **अथेति॥** [6]तत्रोत्तरम्– **तदा सोऽपीति॥** सङ्करालङ्कार एवायं न भवति, अपि त्वलङ्कारध्वनिर्नामायं ध्वनेद्वितीयो भेदः। यच्च पर्यायोक्ते निरूपितं तत्सर्वमत्राप्यनु–

तुरीयं भेदं दर्शयति– **चतुर्थस्त्विति। अनुग्राह्यत्वेनेति।** उपमायाः ससन्देहे पर्यवसानमिति यावत्। **अनुग्राह्यत्वेनेति।** ससन्देहस्येति शेषः। व्यङ्ग्याऽप्युपमा अनुग्राहकत्वात् ससन्देहस्यानुग्राह्यस्यानुगत्वरी । अतो वाच्यस्य ससन्देहस्यैव प्राधान्यमतो नात्र ध्वनित्वमित्यर्थः। अस्य भेदस्य लक्षणं प्रदर्शयति– **यथोक्तमिति। तदाहेति।** यदिदं चतुर्थभेदे ध्वन्यभावः प्रादर्शि तदित्यर्थः। **चतुर्थे प्रकारे इति।** अनुग्राह्यानुग्राहकभावसंकरे अयं भेदः प्रथमं वृत्तिकारेण प्रतिक्षिप्तः अथ द्वितीयतृतीययोर्भेदयोः व्यंग्यासंभवात् सन्देहसंकरभेदे प्रथमे पर्यालोचनां करोतीत्याह– **मध्यमयोरिति।**

**होइ** इति। भवति न गुणानुरागः न परं प्रसिद्धिशरणानाम्। किल प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे॥ **व्यतिरेकापह्नुतीति।** 'चन्द्रे दृष्टे शशिमणिः प्रस्नौति, न तु प्रियामुख' इत्यनेनैतावानेव भेदोऽन्योः प्रियामुखचन्द्रयोर्नान्यः कश्चिदिति व्यतिरेको ध्वन्यते।

'चन्द्रो न चन्द्रः प्रियामुखमेव चन्द्रः' इति अपह्नुतिश्च इति यावत्। **अलङ्कारध्वनिरिति।** वस्त्वलङ्काररसास्त्रयो ध्वनयस्तत्र वस्तुध्वनेः प्रथमभूतस्य यो द्वितीयः अलङ्कारध्वनिः **स एवायं** न

[1]क.ख.ग.(नि)(का) 'च' अधिकः. [2]क.ख.ग.(नि)(का) सा. [3]क.ख.ग.(नि)(का) संदेहे. [4]क.ख.ग.(नि)(का) 'इति' नास्ति. [5]क.ख.ग.(नि)(का) आभाति. [6]घ.ङ.(के) अत्र.

सरणीयम्। अथ सर्वेषु संकरप्रभेदेषु व्यङ्ग्यसंभावनानिरासप्रकारं साधारणमाह — **अपि चेति**।। 'क्वचिदपि संकरालंकारे च' इति संबन्धः। सर्वभेदभिन्न इत्यर्थः। संकीर्णता [1]तु मिश्रत्वं लोलीभावः; तत्र कथमेकस्य प्राधान्यं क्षीरजलवत्?

"अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः।
अप्रस्तुतप्रशंसा सा त्रिविधा परिकीर्तिता ॥"

अप्रस्तुतस्य[2] वर्णनं प्रस्तुताक्षेपिणि इत्यर्थः। स चाक्षेपस्त्रिभिः[3] प्रकारैर्भवति— सामान्य-विशेषभावात्, निमित्तनिमित्तिभावात्, सारूप्याच्च। तत्र प्रथमे प्रकारद्वये प्रस्तुताप्रस्तुतयोस्तुल्यमेव प्राधान्यमिति प्रतिज्ञां करोति— **"अप्रस्तुत"** इत्यादिना **"प्राधान्यम्"** इत्यन्तेन। तत्र सामान्यविशेषभावेऽपि द्वयी गतिः— सामान्यमप्राकरणिकं शब्देनोच्यते, गम्यते तु प्राकरणिको विशेषः, स एकः प्रकारः। यथा—

"अहो संसारनैर्घृण्यमहो दौरात्म्यमापदाम् ।
अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः ॥"

अत्र हि दैवप्राधान्यं[4] सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितं सत् प्रकृते क्वापि वस्तुनि विनष्टे विशेषात्मनि पर्यवस्यति। तत्रापि च विशेषांशस्य सामान्येन व्याप्यत्वाद्व्यङ्ग्यविशेषवद्वाच्यसामान्यस्यापि प्राधान्यम्। न हि सामान्यविशेषयोर्युगपत् प्राधान्यं विरुध्यते। यदा तु विशेषोऽप्राकरणिकः प्राकरणिकं सामान्यमाक्षिपति तदा द्वितीयः प्रकारः। यथा—

"एतत्तस्य मुखात् कियत्कमलिनीपत्रे कणं पायसो[5]
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि[6] ॥

संकरालङ्कारः इत्यर्थः। अत्र समर्थकमाह— **यच्चेति। अपि** चेत्यनयोरन्वयं दर्शयति। अथ **समासोक्त्या-क्षेपेत्यादि** शब्दावरुद्धां अप्रस्तुतप्रशंसां विचारयितुं तल्लक्षणमादत्ते—**अधिकारादिति। प्रथमे प्रकारद्वये इति।** सामान्यविशेष्यभावे निमित्तनिमित्तिभावे चेति यावत्। **विशेषांशस्येति।** विनष्टस्य कस्यचिद्वस्तुन इति यावत्। सामान्येन। दैवप्राधान्येनेति यावत्। **व्यङ्ग्यविशेषवत्**— व्यङ्ग्यभूतविशेषवत्, **वाच्यसामान्यस्य**—वाच्यभूत-सामान्यस्येति यावत्।

ननु कथं सामान्यविशेषयोः युगपत् प्राधान्यं स्यात्? यदि सामान्यं **प्रधानं तर्हि** विशेषोऽप्रधानमेव। यदि पुनर्विशेषः प्रधानं, तर्हि सामान्यमप्रधानं स्यात्। उभयोरपि भिन्नत्वात् प्राधान्यं **न संभवतीत्याशंकायामाह— न हीति।** रक्तं पटं वयेत्यादौ विशिष्टपटत्वरक्तत्वादीनां प्राधान्यं युगपदेव दृश्यते, अतो न विरोध इति भावः। **एतदिति। तस्यैतन्मुखात्।** प्रथमं **कियदित्यल्पमेवोपरितनापेक्षयेत्यर्थः। कमलिनीत्यादि।** यदेषः कमलिनीपत्रस्थितं

[1]घ.(का)(कौ) हि. [2]क.ख.ग. 'च' अधिकः. [3]क.ख.(नि)(का) त्रिविधो भवति. [4]ग.(नि)(कौ) स्वातन्त्र्यं. [5](कौ) वारिणो. [6](नि)(का) शृण्वन्यदस्मादपि, (कौ) शृण्वन् यदस्मादपि.

अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-

स्तत्रोड्डीय गतो [1]ममेत्यनुदिनं निद्राति नान्तः शुचा।।" [2]इति।

अत्र अस्थाने महत्त्वसम्भावना[3] सामान्यं प्रस्तुतम्; अप्रस्तुतं तु जलबिन्दौ मणित्वसंभावनं विशेषरूपं वाच्यम्। तत्रापि सामान्यविशेषयोर्युगपत्प्राधान्ये न विरोध इत्युक्तम्। एवमेकप्रकारो द्विभेदोऽपि विचारितः **"यदा तावत्"** इत्यादिना **"विशेषस्यापि प्राधान्यम्"** इत्यन्तेन। [4]एनमेव न्यायं निमित्तनैमित्तिकभावेऽतिदिशंस्तस्यापि द्विप्रकारतां दर्शयति। कदाचिन्निमित्तमप्रस्तुतं सदभिधीयमानं नैमित्तिकं प्रस्तुतमाक्षिपति। यथा–

"ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च।

ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः ।।"

अत्राप्रस्तुतं सुहृद्बान्धवरूपत्वं निमित्तं सज्जनासक्त्या वर्णयति नैमित्तिकीं श्रद्धेयवचनतां प्रस्तुतामात्मनोऽभिव्यङ्क्तुम्। तत्र नैमित्तिकप्रतीतावपि निमित्तप्रतीतिरेव प्रधानीभवत्यनुप्राणकत्वेनेति व्यङ्ग्य[5]व्यञ्जकयोः प्राधान्यम्। कदाचित्तु नैमित्तिकमप्रस्तुतं वर्ण्यमानं सत् प्रस्तुतं निमित्तं व्यनक्ति यथा सेतौ–

"सग्गं अपारिजाअं कोत्थुहलच्छिरहिअं महुमहस्स उरम् ।

सुमरामि महणपुरओ अमुद्धअन्दं च हरजडापब्भारम् ।।"

अत्र जाम्बवान् कौस्तुभलक्ष्मीविरहितहरिवक्षःस्मरणादिकमप्रस्तुतं[6]नैमित्तिकं वर्णयति प्रस्तुतं वृद्धसेवाचिरजीवित्वव्यवहारकौशलादिनिमित्तभूतं मन्त्रितायामुपादेय[7]मभिव्यङ्क्तुम्। तत्र निमित्तप्रतीतावपि नैमित्तिकं वाच्यभूतम्। प्रत्युत तन्निमित्तानुप्राणितत्वेनोद्धुरकन्धरीकरोत्यात्मानमिति समप्रधानतैव वाच्यव्यङ्ग्ययोः। एवं द्वौ प्रकारौ प्रत्येकं द्विविधौ विचार्य तृतीयः प्रकारः परीक्ष्यते सारूप्यलक्षणः। तत्रापि द्वौ प्रकारौ–अप्रस्तुतात् कदाचिद्वाच्याच्चमत्कारः, व्यङ्ग्यं तु तन्मुखप्रेक्षम्। यथास्मदुपाध्यायभट्टेन्दुराजस्य–

जलकणं मुक्ताफलं मन्यते तद्भवेदेव सादृश्यबलात् तदत्यल्पमित्यर्थः– **शृण्वन्यदित्यादि।** अस्मात् प्रसिद्धात्तदानीं तत्र स्थिताज्जनादिति यावत्।

मम हस्तान्महारत्नमुड्डीय गतमित्येवमन्तः शुचा अनुदिनं निद्रादिकं न लभत इत्येतदति– महदित्यर्थः। **अत्रेति।** जडानामिति शेषः। **एकप्रकार इति।** सामान्यविशेषभावनिबन्धन इत्यर्थः। **द्विभेद इति।** सामान्यविशेषयोर्वाच्यत्वभेदभिन्न इत्यर्थः। **ये यान्तीति।** कस्यचित् सुहृदं प्रति किञ्चिद्विवक्षोर्वचनमिदम्। सज्जनासक्त्या सज्जनाभिप्रायेण **अनुप्राणकत्वेनेति** प्रतीयमानोज्जीवकत्वेनेत्यर्थः।

**उद्धुरकन्धरीकरोत्यात्मानं** प्रधानीभवतीत्यर्थः। तन्मुखप्रेक्षमिति वाच्यमुखप्रेक्षं अप्रधानमित्यर्थः। **प्राणा**

[1]क.ख.(नि)(का) **हहे.** [2]क.ख.ग.(नि)(का) **'इति' नास्ति.** [3]क.ख.ग.(नि)(का) **०भावनं.** [4]क.ख.ग.(नि)(का) **एतमेव.** [5]क.ख.(नि)(का) **वाच्यव्यंग्ययोः.** [6]ग.(नि)(का) **प्रस्तुतनैमित्तिकं.** [7]क.ख.(कं) **उपादेयभूतायां.**

'प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः
स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यामपि[1]।
तस्यास्य स्मितमात्रकेण जनयञ्जीवापहारक्रियां
भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥"

अत्र यद्यपि सादृश्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते, तथाप्यप्रस्तुतस्यैव वेतालवृत्तान्तस्य चमत्कारकारित्वम्। न ह्यचेतनोपालम्भवदसंभाव्यमानोऽयमर्थो न च न हृद्य इति वाच्यस्यात्र प्रधानता। यदि पुनरचेतनादिनात्यन्तासंभाव्यमानतदर्थविशेषणेन अप्रस्तुतेन वर्णितेन प्रस्तुतमाक्षिप्यमाणं चमत्कारकारि तदा वस्तुध्वनिरसौ। यथा ममैव—

"भावव्रात हठाज्जनस्य हृदयान्याक्रम्य यन्नर्तयन्
भङ्गीभिर्विविधाभिरात्महृदयं प्रच्छाद्य [2]संक्रीडसे।
स त्वामाह जड ततः सहृदयंमन्यत्वदुःशिक्षितो
मन्येऽमुष्य जडात्मता स्तुतिपदं त्वत्साम्यसंभावनात्॥"

कश्चिन्महापुरुषः "वीतरागोऽपि सरागवत्" इति न्यायेन गाढविवेकालोकतिरस्कृत-तिमिरप्रतानोऽपि लोकमध्ये स्वात्मानं प्रच्छादयन् लोकं च चालयन् आत्मन्यप्रतिभा-समेवाङ्गीकुर्वन् तेनैव लोकेन मूर्खोऽयमिति यदावज्ञायते, तदा तदीयं लोकोत्तरं चरितं प्रस्तुतं व्यङ्ग्यतया प्राधान्येन प्रकाश्यते। जडोऽयमिति उद्यानेन्दूदयादिर्भावो लोकेनावज्ञायते। स च प्रत्युत कस्यचिद्विरहिण औत्सुक्यचिन्तादूयमानमानसतामन्यस्य प्रहर्षपरवशतां करोतीति हठादेव लोकं यथेष्टं विकारकारणाभिर्नर्तयति। न च तस्य हृदयं केनापि [3]विज्ञायते कीदृगयमिति। प्रत्युत महागाम्भीर्येऽतिविदग्धः सुष्ठु गर्वहीनोऽतिशयेन क्रीडाचतुरः स यदि लोकेन जड इति तत एव [4]कारणात् प्रत्युत वैदग्ध्यासंभावनानिमित्तात् संभावितः; आत्मा च यत एव कारणात्

**इति। धुरि** अग्रे। **आक्षिप्यमाणं** व्यज्यमानं। **भावेति** हे भावव्रात पदार्थव्रात, उद्यानादि पदार्थव्रातेति यावत्। **यदिति।** वाक्यार्थपरामर्शी। सज्जनः **सहृदयंमन्यत्वदुःशिक्षितः** — सहृदयं-मन्यत्वदुर्विनीतः, सहृदयोऽहमित्यभिमानेन हतः दुर्ललित इति यावत्। अमुष्य जनस्य जडात्मता, जडोऽसीत्युच्यमानतेत्यर्थः। त्वत्साम्यसंभावनात् स त्वया समत्वापातादित्यर्थः। अत्र प्रस्तुतमर्थं दर्शयति— **कश्चिदित्यादिना प्रकाश्यत** इत्यन्तेन। अप्रस्तुतं वाच्यं विवेचयति। **जडोऽयमित्यादिना। प्रत्युत स्तुतिरित्यन्तेन।** स इन्दूदयादिपदार्थव्रात **विकारकारणाभिः** विकारविधापनाभिः। **स यदीति।** स भावव्रातो वैदग्ध्यासंभावनानिमित्तादेवंविधक्रीडनात् यदि जडोऽयमिति

[1]घ.ङ.(के) सपर्यां पुरः. [2]क.ख.ग.च.(नि) यत्क्रीडसे. [3]क.ख.ग.घ.(नि)(क्र) ज्ञायते. [4](के) 'कारणात्' नास्ति.

प्रत्युत जाड्येन संभाव्यस्तत एव सहृदयः संभावितः;तदस्य लोकस्य जडोऽसीति यद्युच्यते तदा जाड्यमेवंविधस्य भावव्रातस्यातिविदग्धस्य प्रसिद्धमिति सा प्रत्युत स्तुतिरिति जडादपि पापीयानयं लोक इति ध्वन्यते। तदाह— **यदा त्वित्यादिना**[1]**॥ इतरथा त्विति॥** इतरथैव पुनरलंकारान्तरत्वमलंकारविशेषत्वम्, न [2]व्यङ्ग्यप्राधान्येन कथंचिदपीति भावः। उद्देशे यदादिग्रहणं कृतम्। "समासोक्तिः" इत्यत्र द्वन्द्वे तेन व्याजस्तुतिप्रभृतिरलंकारवर्गोऽपि संभाव्यमान[3]व्यङ्ग्यानुप्रवेशः संभावितः। तत्र सर्वत्र साधारणमुत्तरं दातुमुपक्रमते— **तदयमत्रेति।** कियद्वा प्रतिपदं लिख्यतामिति भावः।

तत्र व्याजस्तुतिर्यथा—

"किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः॥"

अत्र व्यङ्ग्यं [4]यत् स्तुत्यात्मकं तेन[5] वाच्यमेवोपस्क्रियते। यत्तूदाहृतं केनचित्—

"[6]आसीन्नाथ पितामही तव मही माता[7] ततोऽनन्तरं
जाता[8] संप्रति साम्बुराशिरशना जाया कुलोद्भूतये।
पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा
युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥'

इति। [9]एतदस्माकं ग्राम्यं प्रतिभाति, अत्यन्तासभ्यस्मृतिहेतुत्वात्। का [10]चानेन स्तुतिः कृता? 'त्वं वंशक्रमेण राजा' इति हि कियदिदमिति एवंप्राया व्याजस्तुतिः सहृदयगोष्ठीषु निन्दितेत्युपेक्ष्यैव॥

संभावितो भवति जनेन। यदि च जनेन आत्मा स्वयं जड इति संभाव्यः, **प्रत्युत** सहृदय इति संभावितस्तर्हि अमुं लोकं प्रति जडोऽसीति वचनमस्य स्तुतिरेव संपद्यते भावव्रातसाम्यापातात्। एवंविधस्य भावव्रातस्यातिविदग्धस्य जाड्यं प्रसिद्धमिति। **तदाहेति।** यदेतत् सारूप्ये प्रतीयमानस्य प्रधानतायां ध्वनित्वमुक्तं तदाहेत्यर्थः। **अलङ्कारविशेषत्वमिति** । अप्रस्तुतप्रशंसात्मकमिति भावः । **न व्यङ्ग्येति** । न व्यङ्ग्यप्राधान्येन ध्वनित्वं कथञ्चिदपीति भाव इत्यर्थः। **व्याजस्तुतिप्रभृतिरलङ्कारवर्गोऽपीति।** न केवलमप्रस्तुतप्रशंसैवेति यावत्। **संभावितः**

[1]क.ख.ग. इति. [2]क.ख.ग.(नि)(का) व्यंग्यस्य कथंचिदपि प्राधान्यमिति. [3]क.ख.(नि)(का) व्यंग्यानुवेशः. [4]क.ख.ग.(नि)(का) 'यत्' नास्ति. [5]क.ख.ग.(नि)(का) यत्तेन. [6]क.ख.ग.(नि) आसीनाथ. [7]क.ख.(का) जाता. [8]क.ख.(का) माता. [9]क.ख.ग.(नि)(का) तदस्माकं. [10]क.ख.(नि) कांचानेन.

"यस्य विकारः प्रभवन्न[1]प्रतिबद्धेन हेतुना येन ।
गमयति तदभिप्रायं तत्प्रति[2]बन्धं च भावोऽसौ ॥"

इत्यत्रापि वाच्यप्राधान्ये भावालंकारता। यस्य चित्तवृत्तिविशेषस्य संबन्धी वाग्व्यापारादिर्विकारोऽ[3]प्रतिबद्धोऽनियतः प्रभवंस्तं चित्तवृत्तिविशेषरूपमभिप्रायं येन हेतुना गमयति स हेतुर्यथेष्टोपभोग्यत्वादिलक्षणोऽर्थो भावालंकारः यथा—

"एकाकिनी यदबला तरुणी तथाहमस्मिन् गृहे गृहपतिश्च गतो विदेशम्।
कं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥"

अत्र व्यङ्ग्यमेकैकत्र पदार्थे उपस्कारकारीति वाच्यं प्रधानम्। [4]व्यङ्ग्यप्राधान्ये तु न कश्चिदलंकारतेति निरूपितं इत्यलं बहुना॥

**यत्रेति॥** काव्ये॥ **अलंकृतय इति॥** अलंकृतित्वादेव च वाच्या[5]र्थोपस्कारकत्वम्॥

**प्रतिभामात्र इति॥** यत्रोपमादौ [6]श्लिष्टार्थप्रतीतिः॥ **वाच्यार्थानुगम इति॥** वाच्येनार्थेनानुगमः समं प्राधान्यम् अप्रस्तुतप्रशंसायामिवेत्यर्थः।[7]। स्फुटतया प्राधान्यं न चकास्ति, अपितु बलात् कल्प्यते, तथापि [8]हृदये नानुप्रविशति। यथा— "दे आ [9]पसिअ णिवत्तसु" इत्यत्रान्यकृतासु व्याख्यासु। तेन चतुर्षु प्रकारेषु न ध्वनिव्यवहारः सद्भावेऽपि [10]व्यङ्ग्यस्य— अप्राधान्ये, श्लिष्टप्रतीतौ, वाच्येन समप्राधान्ये, अस्फुटे प्राधान्ये च[11]। क्व तर्ह्यसावित्याह— **तत्परावेवेति॥** संकरेणालंकारानुप्रवेशसंभावनया उज्झित इत्यर्थः। संकरालंकारेणेति त्वसत्। अन्यालंकारोपलक्षणत्वे हि श्लिष्टं स्यात्॥

स्वीकृतः, व्याजस्तुतिप्रभृतिरित्यर्थः। तत्र प्रभृतिशब्देनावरुद्धेषु अलङ्कारेषु भावालङ्कारं दर्शयति। **यस्येति।** लक्षणवाक्यं व्याचष्टे-**यस्येति।**

अथ संक्षेपार्थश्लोकेषु प्रथमं व्याचष्टे—**यत्रेतीति।** द्वितीयं व्याचष्टे—**प्रतिभामात्र इतीति।** श्लिष्टा अविस्पष्टा। व्यङ्ग्यस्यास्फुटप्राधान्ये ध्वनिर्नास्तीति यदुक्तं, तत्रोदाहरणं दर्शयति—यथेति। दे आ पसिअ णिवत्तसु इत्यत्र ये अन्यकृता व्याख्यानप्रकाराः गुणीभूतव्यङ्ग्यभेदसहृदयोविरूपास्तयः ते प्रत्येकमप्राधान्येन व्यङ्ग्यवन्त इत्यर्थः। **संकर**शब्दं विप्रतिपत्तिपराकरणार्थं व्याचष्टे—**संकरेणेति।** संकरशब्दस्य संकरालङ्कारो नार्थ इत्यर्थः। अन्यथा अलङ्कारान्तरगर्भत्वानुज्ञानात् ध्वनेरलंकार- व्यतिरिक्तो न विषय इति श्लिष्टवचं स्यादित्यर्थः।

[1]ग.(का) अप्रतिबन्धस्तु. [2](नि)(के) बरं. [3](का) अप्रतिबन्ध. [4]क.ख.(नि) प्राधान्ये हि भावालंकारता [5]क.ख.(नि)(का) वाच्योप०. [6]क.ख.(नि) श्लिष्टा प्रतीतिः. [7](नि)(का)(के) 'न प्रतीयते इति' इति पाठोऽधिकम्. [8]क.ख. 'च' अधिकम्. [9]क.ख.ग.(का) देआ पसिअणिआतासु. [10]क.ख.ग.घ.(नि) 'प्राधान्यम्' अधिकः. [11]ग.(के) 'च' नास्ति.

**इतश्चेति॥** न केवलमन्योन्यविरुद्धवाच्यवाचकभावव्यङ्ग्यव्यञ्जकभावसमाश्रयत्वात् न तादात्म्यमलंकाराणां ध्वनेश्च, यावत् स्वामिभृत्यवदङ्गिरूपाङ्गरूपयोर्विरोधादित्यर्थः॥ **अवयव इति॥** एकैक इत्यर्थः। तदाह— **पृथग्भूत इति।** [1]पृथग्भूतस्तथा मा भूत्, समुदाय[2]मध्यपतितस्तर्ह्यस्तु तथेत्याशङ्क्याह— **अपृथग्भावे त्विति॥** तदापि न स एक एव समुदायः, अन्येषामपि समुदायिनां तत्र भावात्; तत्समुदायिमध्ये च प्रतीयमानमप्यस्ति ;न च तदलंकार[3]स्वरूपम्, प्रधानत्वादेव ; यत्त्वलंकाररूपं तदप्रधानत्वान्न ध्वनिः ;तदाह— **न तु तत्त्वमेवेति॥** नन्वलंकार एव कश्चित्त्वया प्रधानताभिषेकं दत्वा ध्वनिरित्यात्मेति चोक्त इत्याशङ्क्याह— **यत्रापि वेति॥** न हि समासोक्त्यादीनामन्यतम एवासौ तथास्माभिः कृतः, तद्विविक्तत्वेऽपि तस्य भावात्। समासोक्त्याद्यलंकारस्वरूपस्य समस्तस्याभावेऽपि तस्य दर्शितत्वात् "अत्ता एत्थ" इति "कस्स वा ण" [4]इति। तदाह— **न तन्निष्ठत्वमेवेति॥** [5]विद्वद्भ्य उपज्ञा प्रथमत उपक्रमो यस्या उक्तेरिति बहुव्रीहिः। तेन "उपज्ञोपक्रमम्" इति तत्पुरुषाश्रयं नपुंसकत्वं निरवकाशम्॥ **श्रूयमाणेष्विति॥** श्रोत्रशष्कुलीं संतानेनागता [6]अन्त्याः शब्दाः श्रूयन्त इति प्रक्रियायां शब्दजाः[7]शब्दाः श्रूयमाणा इत्युक्तम्। तेषां घण्टानुरणनरूपत्वं तावदस्ति, ते च ध्वनिशब्देनोक्ताः। यथाह तत्रभवान् भर्तृहरिः —

"यः संयोगवियोगाभ्यां करणैरुपजन्यते ।
स स्फोटः [8]शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः॥"

अथात्र हेत्वन्तरं दर्शयितुमाह— **इतश्च नान्तर्भाव इति।** **न चेति।** अवयव एवावयवीति न भवतीत्यर्थः। अपृथगिति तस्यावयवस्य, अवयवाङ्गत्वमिति यावत्। **न तु तत्त्वमेवेति।** अवयवित्वमेवेत्यर्थः। **यत्रापि वा तत्त्वमिति।** यत्र पर्यायोक्त्यादौ 'भम धम्मिअ' इत्यत्र पर्यायोक्तादिकल्पेन ध्वनित्वमुक्तम्। 'हो इ ण गुणानुराओ' इति संकरालङ्कारेऽपि ध्वनिरस्तीत्युक्तम्। 'भावव्राते'त्यप्रस्तुतप्रशंसायामपि तथा तद्भाव उक्त इति। **तत्त्वं।** अवयवित्वं व्यङ्ग्यप्राधान्यमित्यर्थः। **तन्निष्ठत्वं** तदवयवनिष्ठत्वं तदलङ्कारनिष्ठत्वमिति यावत्। **श्रोत्रशष्कुलीमिति।** संयोगविभागात् शब्दाच्च शब्दनिष्पत्तिरिति शब्दजाः शब्दाः अन्त्याः श्रूयन्ते इति वैशेषिकप्रक्रिया। **तेषामिति** श्रूयमाणानामन्त्यानां शब्दजानां शब्दानामिति यावत्। **घण्टेति।** पूर्वशब्दजन्यत्वादिति शेषः। तेषां ध्वनिशब्दवाच्यत्वे प्रमाणमाह— **यथेति।** संयोगविभागाभ्यां ताल्वादिस्थानसंयोगविभागाभ्याम्। **करणैः** जिह्वामूलभागादिभिः। **स स्फोट** इति। प्रथममेव जायते स्फोटः, अभिव्यज्यते स्फोटः, पुनः शब्दजाः शब्दा ये श्रूयन्ते ते ध्वनयः इत्यर्थः।

[1]क.ख.घ.ङ.च.(नि)(का) 'अथ' अधिकः. [2]ग.घ.(नि)(का)(के) मध्यनिपतितः. [3]क.ख.ग.(का) रूपम्. [4]क.ख.ग.(नि) (का) इत्यादि. [5]क.ख.(नि) 'तस्मिन्निष्ठा यस्येति तत्र भवति। महाविषयत्वात् व्यापकत्वादित्यर्थः। घटो घट एव न भवति किं तु तत्कर्मपरोऽपि, तत्रापि न भवति किं तु घटेऽपीत्यनेन व्यापकोऽयमित्युक्तं भवति महाविषयत्वात् विद्वदुपज्ञेति' अधिकः. [6]ङ.च. (के) शब्दाः श्रूयन्ते अन्त्याः. [7]ग.(नि) 'शब्दजाः' नास्ति. [8]क.ख.(नि) शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः.

एवं घण्टा[1]निर्ह्रादस्थानीयोऽनुरणनात्मोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः। तथा [2]श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनि[3]र्ग्राह्याः स्फोटाभिव्यञ्जकाः ते ध्वनिशब्देनोक्ताः। यथाह स[4] एव तत्रभवान्—

"प्रत्ययैरनुपाख्येयैर्ग्रहणानुग्रहैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥"

इति। तेन व्यञ्जकौ शब्दार्थावपीह ध्वनिशब्देनोक्तौ। किंच वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्सु, यथोक्तम्—

"अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः ।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥"

इति। तेषु तावत्स्वेव श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणव्यापारादभ्यधिकः स [5]व्यापारो ध्वनिरुक्तः। स एव [6]यदाह—

"शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदं तु[7] वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥"

इति। अस्माभिरपि प्रसिद्धेभ्यः शब्दव्यापारेभ्योऽभिधातात्पर्यलक्षणारूपेभ्योऽतिरिक्तो व्यापारो ध्वनिरुक्तः। एवं चतुष्कमपि ध्वनिः। तद्योगाच्च समस्तमपि काव्यं ध्वनिः। तेन

एवमिति। एवंप्रकारेणान्त्यो व्यङ्ग्यरूपो यः शब्दः पूर्वशब्दव्यञ्जितः स ध्वनिरिति **वैयाकरणैरेवोक्तः** इत्यर्थः।

एवं व्यङ्ग्यात्मकस्यार्थस्य ध्वनिशब्दवाच्यत्वं प्रसाध्य वाच्यवाचकयोरपि तत्प्रसाधयितुमाह— **अन्त्यबुद्धीति।** अन्त्या या बुद्धिः अन्त्यध्वनिसहितबुद्धिः, तया ग्राह्यो यः स्फोटः, तस्याभिव्यञ्जका इति यावत्। तदुक्तम्—

नादैराहितबीजायामन्त्येन ध्वनिना सह। आवृत्तपरिपाकायां बुद्धौ शब्दो विभाव्यते॥ इति ।

**प्रत्ययैरिति।** अथ व्यापारस्यापि व्यञ्जनात्मकस्य ध्वनिशब्दाभिधेयत्वं समर्थयति—**किं चेति। वर्णेषु तावन्मात्रपरिमाणेष्वपि सत्स्वित्यस्य वक्तुर्योऽन्यो** द्रुतेत्यादिना सम्बन्धः तत्र तदेकदेशमप्युक्तं संवादेन द्रढयितुमाह—**अल्पीयसापीति।** अल्पीयसा यत्नेनोच्चारितो वर्णः। किञ्चिदपि न गृह्यते वा, स्फुटं सकलो गृह्यते वा, न तु किञ्चिद्गृह्यते वर्णस्य निरवयवत्वादित्यर्थः।

**वृत्तिभेदात्मा।** व्यापारविशेषात्मा। **शब्दस्येति।** शब्दस्याभिव्यक्तेरूर्ध्वं ये वैकृता द्रुतादयो वृत्तिभेदास्ते ध्वनय

[1]क.ख.(नि) घण्टादि. [2]क.ख.(नि) 'इत्येष प्रकारोऽव्यक्तशब्दानामेव वर्तते। व्यक्तशब्दानाम्' अधिकः. [3]ङ.च. ग्राह्यस्फोट. [4]क.ख.(नि) भगवान् स एव [5]क.ख.ग.(नि) 'व्यापारः' नास्ति. [6]क.ख.ग.घ.(नि)(को) यदाह स एव (यथाह) इति. [7]घ.ङ. व्यक्तिभेदास्तु, ग. वृत्तिभेदास्तु.

व्यतिरेकाव्यतिरेकव्यपदेशोऽपि न न युक्तः ॥ **वाच्यवाचकसंमिश्र इति॥** वाच्यवाचकसहितः संमिश्र इति मध्यमपदलोपी समासः। "गामश्वं पुरुषं [1]पशुम्" इतिवत् समुच्चयोऽत्र चकारेण विनापि। तेन वाच्योऽपि ध्वनिः; वाचकोऽपि शब्दोः ध्वनिः; द्वयोरपि व्यञ्जकत्वम्, [2]ध्वनतीति कृत्वा। [3]संमिश्र्यते विभावानुभावसंवलनयेति व्यङ्ग्योऽपि ध्वनिः, ध्वन्यत इति कृत्वा। शब्दनं शब्दः शब्दव्यापारः। न चासावभिधादिरूपः, अपि त्वात्मभूतः; सोऽपि [4]ध्वननं ध्वनिः। काव्यमिति व्यपदेश्यश्च योऽर्थः सोऽपि ध्वनिः, उक्तप्रकारध्वनिचतुष्टयत्वात्। अत एव साधारणं हेतुमाह— **व्यञ्जकत्वसाम्यादिति॥** [5]व्यञ्जकत्वं व्यङ्ग्य[6]व्यञ्जकभावः सर्वेषु पक्षेषु सामान्यरूपः साधारण इत्यर्थः। यत् पुनरेतदुक्तम् "वाग्विकल्पानामानन्त्यात्" इत्यादि, तत् परिहरति— **न चैवंविधस्येति॥** वक्ष्यमाणः प्रभेदो यथा— मुख्ये द्वे रूपे; तद्भेदा यथा— अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्य इत्यविवक्षितवाच्यस्य, असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्य इति विवक्षितान्यपरवाच्यस्येति; तत्राप्यवान्तरभेदाः॥ **महाविषयस्येति॥** अशेषलक्ष्यव्यापिन इत्यर्थः। विशेषग्रहणेनाव्यापकत्वमाह; मात्रशब्देनाङ्गित्वाभावम्। तत्र[7] ध्वनिस्वरूपे भावितं प्रणिहितं चेतो येषाम्; तेन[8] वा चमत्कार[9]स्वरूपेण भावितमधिवासितम्, अत एव मुकुलितलोचनत्वादिविकारकारणं चेतो येषाम्[10]। **अभाववादिन इति॥** अवान्तरप्रकारत्रयभिन्ना अपीत्यर्थः। **तेषां प्रत्युक्तौ फलमाह—अस्तीति॥**

उदाहरणपृष्ठे भाक्तत्वं सुशङ्कं सुपरिहरं च भवतीत्यभिप्रायेणोदाहरणदानावकाशार्थं [11]भाक्तत्वालक्षणीयत्वे प्रथमं परिहरणयोग्ये अप्यप्रतिसमाधाय भविष्यदुद्द्योत[12]गतानुवादानुसारेण वृत्तिकृदेव प्रभेदनिरूपणं करोति— **स चेति॥** पञ्चधापि ध्वनिशब्दार्थे येन यत्र यतो यस्मै

इत्यर्थः। **व्यतिरेकाव्यतिरेकव्यपदेशः** भेदाभेदव्यपदेशः 'काव्यस्यात्मा ध्वनि'रिति व्यतिरेकव्यपदेशः। **वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमिति व्यपदेश्य** इति। अत्र त्रयोऽप्यर्थाः समुच्चेतव्याः। **वाच्यवाचकसम्मिश्र इति** द्वन्द्वः, मध्यमपदलोपी वा। **सम्मिश्र** इति व्यङ्ग्योऽर्थ उच्यते रसादिरूपः। **तेनेत्यादिना** पञ्चानामपि ध्वनित्वं सोपपत्तिकं प्रदर्शयति। तत्र हेतुमाह— **अत एवेति।** साधारणं सर्वत्र तुल्यम्। एवं स्थिते तृतीयाभावप्रकारोक्तखण्डपराकरणस्य क्रियमाणस्योत्थापनं निबध्नाति—**प्रत्युक्तिरिति। अङ्गित्वाभावमिति।** अत्राहेत्यनुषज्यते— **अस्तीति।**

ननु अभाववादं प्रतिक्षिप्य ध्वनिसद्भावे समर्थिते, क्रमप्राप्तं भाक्तपक्षं प्रविघटयितुं युक्तम्, अनिर्वचनीयपक्षं च। तत्र कथमन्तरा ध्वनिभेदस्तदुदाहरणं च समुद्भाव्यत इत्याशङ्कायामाह— **उदाहरणेति।** उदाहरणपृष्ठे उदाहरणानन्तरम्। **वृत्तिकृदेवेति।** नात्र सूत्रकारवचनं किञ्चिदिति यावत्। **पञ्चधापीति।** ध्वनिः शब्द इति पक्षे अविवक्षितो वाच्यो **येनेति** बहुव्रीहिः। यत्रेति वा यत इति वा यस्मै इति यस्येति वा सर्वत्रान्यपदार्थः

1ङ.च.(के) 'पशुम्' नास्ति. 2(के) ध्वनिकृत्वात्. 3क.ख.ग. मिश्रिते. 4ग. ध्वननात्. 5ग. व्यंग्यस्य, ङ. व्यञ्जकत्वमिति. 6क.ख.(नि) व्यञ्जनभावः, ग. व्यञ्जकभावः. 7क.ख.(नि) 'न चैवं भवतीत्यन्वयः' अधिकः. 8क.ख.ग.(नि)(का) न, ग.(नि) अग्रे 'वा' नास्ति. 9क.ख.ग.(नि)(का)(के) रूपेण. 10क.ख.ग.(नि)(के) 'इति' अधिकः. 11क.ख.ग.(नि) भाक्तत्वाल्लक्षणीयत्वे. 12क.ख.(नि) ०उद्द्योतानु०, ग. उद्द्योते गतानु.

यस्य चेति बहुव्रीह्यर्थाश्रयेण यथोचितं सामानाधिकरण्यं सुयोजम्। **वाच्येऽर्थे तु ध्वनौ** वाच्यशब्देन स्वात्मा[1] तेनाविवक्षितोऽप्रधानीकृतः[2]स्वात्मा येनेत्यविवक्षितवाच्यो व्यञ्जकोऽर्थः। एवं विवक्षितान्यपरवाच्येऽपि। यदि वा कर्मधारयेणार्थपक्षे अविवक्षितश्चासौ वाच्यश्चेति। विवक्षितान्यपरश्चासौ वाच्यश्चेति। तत्रार्थः कदाचिदनुपपद्यमानत्वादिना निमित्तेनाविवक्षितो भवति। कदाचिदुपपद्यमान इति कृत्वा विवक्षित एव, व्यङ्ग्यपर्यन्तां तु प्रतीतिं स्वसौभाग्यमहिम्ना करोति। अत एवार्थोऽत्र प्राधान्येन व्यञ्जकः, पूर्वत्र शब्दः। ननु च विवक्षा चान्यपरत्वं चेति विरुद्धम्, अन्यपरत्वेनैव विवक्षणात्को विरोधः? **सामान्येनेति॥** वस्त्वलंकाररसात्मना हि त्रिभेदोऽपि ध्वनिरुभाभ्यामेवाभ्यां संगृहीत इति भावः। ननु तन्नामपृष्ठे एतन्नामनिवेशनस्य किं फलम्। उच्यते— अनेन हि नामद्वयेन ध्वननात्मनि व्यापारे पूर्वप्रसिद्धाभिधातात्पर्यलक्षणात्मक-व्यापारत्रितयावगतार्थप्रतीतेः प्रतिपत्तृगतायाः प्रयोक्त्रभिप्रायरूपायाश्च विवक्षायाः सह-कारित्वमुक्तमिति ध्वनिस्वरूपमेव नामभ्यामेव प्रोज्जीवितम्। **सुवर्णपुष्पामिति॥** सुवर्णानि

शब्दः। ध्वनिर्व्यङ्ग्य इति पक्षे 'अविवक्षितो वाच्यो येन'ति बहुव्रीहिः। यत्रेति वा यत इति वा यस्मै इति वा यस्येति वा सर्वत्र व्यङ्ग्य एवान्यपदार्थः। ध्वनिर्व्यापार इति पक्षे अविवक्षितो वाच्यो येनेति अन्यार्थः। यत्रेत्यादिकमपि पूर्ववत्। ध्वनिः काव्यमिति पक्षे अविवक्षितो वाच्यो येनेत्यर्थः। अन्यत् पूर्ववत्। ध्वनिर्वाच्यार्थ इति पक्षे नैष न्यायः। कथमित्याह— **वाच्येऽर्थे त्विति।** अत्र उच्यत इत्यध्याहार्यम्। वाच्यशब्देन स्वात्मा उच्यते इत्यर्थः। **यदि वेति।** **अथवा अर्थपक्षे कर्मधारयाभिप्रायेण योजनीयमिति यावत्। तदेव दर्शयति—अविवक्षित इति।** ततोऽविवक्षितवाच्यो ध्वनिरिति सामानाधिकरण्यम्। **विवक्षितान्यपरेति।** अत्रोपपत्तिं दर्शयति—**तत्रार्थ इति।आदिशब्देनानु**पयोगित्वं गृह्यते। अविवक्षितवाच्ये ध्वनौ वाच्यस्यानुपपद्यमानत्वं अनुपयोगित्वं वा। विवक्षितान्यपरवाच्ये **उपपद्यमानत्वम्।** अथाशङ्कते— **ननु चेति।** परिहरति— **अन्येति।**

एतावन्मात्रेणात्र व्यक्तिविवेककारेणोक्तम् प्रतिहृतं वेदितव्यम्। आशङ्कते-**नन्विति। तन्नामपृष्ठे** ध्वनिनामपृष्ठे एतन्नामनिवेशनस्य अविवक्षितवाच्य विवक्षितान्यपरवाच्येति नामद्वयनिदेशनस्य। परिहरति— **उच्यत** इति॥ **अनेन नामद्वयेन** व्यापारो ध्वनिरिति पक्षं प्रति **अभिधादिव्यापारत्रयावगतार्थ**प्रतीतेर्वक्तृ-**विवक्षायाश्च सहकारित्वमुक्तम्।** तेन नामभ्यां ध्वनिस्वरूपमेव प्रोज्जीवितमित्यर्थः।

[1] ग.(नि) 'वक्ष्यते' अधिकः. [2] क.ख.(नि) भूतः, ग. कृतः .... णार्थपक्षे अविवक्षितश्चासावर्थश्चेति। विवक्षितान्यपरश्चासौ वाच्यश्चेति। तत्रार्थः.

पुष्यतीति सुवर्णपुष्पा। एतच्च वाक्यमेवासंभवत्स्वार्थमिति कृत्वा[1]ऽविवक्षितवाच्यम्। तत एव पदार्थमभिधायान्वयं च तात्पर्यशक्त्यावगमय्यैव बाधकवशेन तमपहस्त्य[2] सादृश्यात् सुलभसमृद्धिसंभारभाजनतां लक्षयति। तल्लक्षणाप्रयोजनं[3] शूरकृतविद्यसेवकानां प्राशस्त्यम-शब्दवाच्यत्वेन गोप्यमानं सन्नायिकाकुचकलशयुगलमिव महार्घतामुपयद्ध्वन्यत इति शब्दोऽत्र प्रधानतया व्यञ्जकः, अर्थस्तु तत्सहकारितयेति चत्वारो[4]ऽत्र व्यापाराः॥ **शिखरिणीति॥** न हि निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वत[5]प्रभृतय इमां सिद्धिं विदध्युः। दिव्यकल्पसहस्रादिश्चात्र परिमितः कालः[6]। न चैवंविधोत्तम[7]फलत्वेन पञ्चाग्निप्रभृत्यपि तपः श्रुतम्। तवेति भिन्नं पदम्— समासेन विगलिततया सा न प्रतीयते[8]— तव दशतीत्यभिप्रायेण। तेन यदाहुः— 'वृत्तानुरोधात्त्वदधरपाटलमिति न कृतम्' इति, तदसदेव॥ **दशतीति॥** आस्वादयति अविच्छिन्न[9]प्रबन्धतया, न त्वौदरिकवत्परं[10] भुंक्ते; अपि तु रसज्ञोऽत्रेति तत्प्राप्तिवदेव रसज्ञताप्यस्य तपःप्रभावादेवेति॥ **शुकशाबक इति॥** तारुण्याद्युचितकाललाभोऽपि तपसैवेति[11]। अनुरागिणश्च प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्य[12]चाटुविरचनात्मकविभावो-न्मीलनं[13]व्यङ्ग्यम्। अत्र च त्रय एव व्यापाराः — अभिधा तात्पर्यं ध्वननं चेति; मुख्यार्थबाधा[14]दिविरहे मध्यमकक्ष्याया लक्षणायास्तृतीयस्या अभावात्। यदि वाकस्मिकविशिष्टप्रश्नार्थानुप-पत्तेर्मुख्यार्थबाधायां[15]सादृश्याल्लक्षणा भवतु मध्ये; तस्यास्तु तत् प्रयोजनं ध्वन्यमानमेव; [16]तत्तुर्यकक्ष्यानिवेशि। केवलं पूर्वत्र लक्षणैव प्रधानं ध्वननव्यापारे सहकारि; इह

अर्थप्रतीतिः प्रतिपत्तृगता विवक्षा प्रयोक्तृगतेति च विभागः। **चिन्वन्ति** लभन्ते इत्यर्थः। **अपहस्त्य** परित्यज्य। **सादृश्यात्**— पुष्पोच्चयनरूपात्। **चत्वारोऽत्र व्यापारा इति।** अभिधा तात्पर्यं लक्षणा व्यञ्जनमिति चत्वारः। **शिखरिणीति।** अत्र पदेषु ध्वनिं प्रकाशयति— **न हीत्यादिना— तवेति।**

**त्वदधरपाटलमिति** समासे सति युष्मदर्थो **विगलिततया** अप्रधानतया प्रतीयेत। न च तथा प्रतीयताम्, अपि तर्हि प्राधान्येन प्रतीयतामित्यभिप्रायेण तवेति पदं भिन्नं कृतम्, न तु समस्तमित्यर्थः। अत एवाह— **तेन यदाहुरिति।** स्वाभिप्रायः। अधरास्वादनाभिलाषरूपः। **वैदग्ध्येति।** वैदग्ध्येनाग्राम्यतया। **यच्चाटुविरचनं** तदात्मको यो **विभावः** प्रेमकारणं तरुणीरागकारणं **तस्योद्दीपनं** पोषणमित्यर्थः॥ **यदि वेति'** अथवा **आकस्मिकः** असंभावितः। विशिष्टः शुकवृत्तान्तरूपो योऽर्थः, तस्यानुपपत्तेः आकस्मिकत्वादेवानुपपत्तेः। निमित्तान्**मुख्यार्थबाधायां** सत्यां, **सादृश्याद्विशिष्टशुकबिम्बफलास्वादनमिव** तरुणविशेषस्य त्वदधरपल्लवामृतास्वादनं इत्येवंरूपाल्लक्षणा भवतीत्यर्थः। **ध्वन्यमानमेवेति।** प्रथम-पक्षोक्तमेवेति यावत्। तत्र विशेषमाह— **तत्तुर्येति।** लक्षणायां खलु प्रयोजनं व्यङ्ग्यरूपं

1(के) अविवक्षित. 2क.ख. वशेनोपहत्य, ग.घ.च.(नि)(का) तमपहत्य. 3क.ख.(नि) प्रयोजकं. 4क.ख.ग.(नि) 'अत्र' नास्ति. 5क.ख.(नि) पर्वतादयः. 6क.ख.ग.(नि) 'किमभिधानमिति' अधिकः. 7ग.(नि) फलजनकत्वेन. 8(कौ) प्रतीयताम्. 9क.ख.ग.(नि) अनवच्छिन्न. 10(के) ०परिभुङ्क्ते. 11क.ख.घ.च.(नि)(के) तपस एवेति. 12क.ख.ग.(नि) 'वैदग्ध्य' नास्ति. 13(कौ) उद्दीपनं. 14ग.(नि)(के) मुख्यादबाधाविरहे. 15ग.च. मुख्यबाधायाम्, (के) मुख्यबाधया. 16क.ख.ग. 'तत्' नास्ति.

त्वभिधातात्पर्यशक्ती, वाक्यार्थसौन्दर्यादेव व्यङ्ग्यप्रतिपत्तेः; केवलं लेशेन लक्षणाव्यापारोपयोगोऽप्यस्तीत्युक्तम्, असंलक्ष्यक्रमव्यङ्ग्ये तु लक्षणासमुन्मेषमात्रमपि नास्ति, असंलक्ष्यत्वादेव क्रमस्येति वक्ष्यामः। तेन द्वितीयेऽपि भेदे चत्वार एव व्यापाराः। अत एवोभयोदाहरणपृष्ठ एव, "भाक्तमाहुः" इत्यनुभाष्य[1] दूषयति। अयं भावः-- भक्तिर्ध्वनिश्चेति किं पर्यायवत्ताद्रूप्यम्। अथ पृथिवीत्वमिव पृथिव्या अन्यतो व्यावर्तक-धर्मरूपतया लक्षणम्? उत काक इव देवदत्तगृहस्य संभवमात्रादुपलक्षणम्? तत्र प्रथमं पक्षं

I.14 निराकरोति– **भक्त्या बिभर्तीति॥** उक्तप्रकार इति पञ्चस्वर्थेषु योज्यम्– शब्दे, अर्थे, व्यापारे, व्यङ्ग्ये, समुदाये, च। रूपभेदं दर्शयितुं ध्वनेस्तावद्रूपमाह– वाच्येति॥ तात्पर्येण विश्रान्तिधामतया। प्रयोजनत्वेनेति यावत्। प्रकाशनं द्योतनमित्यर्थः॥ **उपचारमात्रमिति॥** उपचारो गुणवृत्तिलक्षणा उपचरणमतिशयितो व्यवहार इत्यर्थः। मात्रशब्देनेदमाह– यत्र लक्षणाव्यापारात्तृतीयादन्यश्चतुर्थः प्रयोजनद्योतनात्मा व्यापारो वस्तुस्थित्या संभव-न्नप्यनुपयुज्यमानत्वेनानादियमाणत्वादसत्कल्पः "यमर्थमधिकृत्य" इति हि [2]प्रयोजन-

चतुर्थकक्ष्यानिवेशीति **इह त्विति।** शिखरिणीत्युदाहरणे लक्षणाश्रये तत्र ये **अभिधातात्पर्यशक्ती** ते एव ध्वननव्यापारे सहकारिण्यौ भवत इति यावत्।

तत्र हेतुमाह– **वाक्यार्थेति । असंलक्ष्येति ।** अविवक्षितवाच्ये ध्वनौ लक्षणाऽस्त्येव। विवक्षितान्यपरवाच्ये लक्षणा नास्ति। असंलक्ष्यक्रमव्यंग्ये तु विकल्पः। शिखरिणीत्युदाहरणे लक्षणा-श्रयणपक्षेण चत्वार एव व्यापार इत्यर्थः।

अथ भाक्तवादं व्याकुलयितुमुपक्रमते– **अत एवेति। भक्तिर्ध्वनिरित्युक्ते पक्षत्रयं भवतीत्याह--** **अयं भाव इति। पर्यायवदिति।** इन्द्रः शक्रः इत्यनयोः पर्याययोः यथा एकरूपत्वं तथा किं भक्तिध्वन्योः पर्यायत्वेनैकरूप्यमित्येको विकल्पः। **पृथिवीत्वमिवेति।** पृथिवीत्वं पृथिव्या लक्षणमिति वैशेषिकाः। तत्र पृथिवीत्वं यथा पृथिव्या जलादिभ्यो व्यावर्तकतया लक्षणं, तथा भक्तित्वं ध्वनेः किं लक्षणमिति द्वितीयः। **काकवदिति।** काकवन्तः चैत्यगृहा इत्यत्र यथा काकश्चैत्रगृहस्योपलक्षणं कादाचित्कतया भेदहेतुः, तथा किं भक्तिर्ध्वनेरुपलक्षणमिति तृतीयः। **भक्त्येति।** ध्वनिर्भक्त्या एकतां ऐक्यं न बिभर्तीत्यन्वयः। **अतिशयित इति।** 'गौर्देवदत्त' इत्यादावमुख्ये मुख्यार्थारोपणमतिशयव्यवहारो भवतीति। **वस्तुस्थित्येति।** प्रयोजनाभावे मुख्यवृत्तिपरित्यागो न युक्त इत्येवंरूपयेति यावत्। **अनुपयुज्यमानत्वेनानादियमाणत्वात् असत्कल्प इति।** यथा– 'कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्' इत्यादौ। अत्र हि वदति ना पिशुनत्वं लक्ष्यते। तत्र यत्प्रयोजनं स्पष्टतया झटिति सन्तापग्रहणं, तन्नात्यादरास्पदं भवति। **यमर्थमिति।**

[1]ख. अनुभाष्य. [2]क.ख.ग.(नि)(का) प्रवर्तते तद्धि.

**लक्षणम्**— तत्रापि लक्षणास्तीति कथं ध्वननं लक्षणं[1] चेत्येकं तत्त्वं स्यात्? द्वितीयं पक्षं दूषयति— **अतिव्याप्तेरिति**[2]**॥** असाविति ध्वनिः। तयेति भक्त्या। ननु ध्वननमवश्यंभावीति कथं तद्व्यतिरिक्तोऽस्ति विषय इत्याह— **महत् सौष्ठवमिति॥** अत एव प्रयोजनस्यानादरणीयत्वाद्व्यञ्जकत्वे न[3] किंचित् कृत्यमिति भावः। महद्ग्रहणेन गुणमात्रं तद्भवति, यथोक्तम्— "समाधिरन्यधर्मस्य क्वाप्यारोपो विवक्षितः" इति दर्शयति। ननु प्रयोजनाभावे कथं तथा व्यवहार इत्याह— **प्रसिद्ध्यनुरोधेति॥** परम्परया तथैव प्रयोगात्। वयं तु ब्रूमः — प्रसिद्धिर्या [4]प्रयोजनस्या[5]निगूढतेत्यर्थः। उत्तानेनापि रूपेण तत्प्रयोजनं चकासन्निगूढतां निधानवदपेक्षत इति भावः। वदतीत्युपचारेण[6] हि स्फुटीकरणप्रतिपत्तिः प्रयोजनं [7]यद्यगूढं स्वशब्देनोच्यते किमचारुत्वं स्यात्? गूढतया वर्णने[8] वा किं चारुत्वमधिकं [9]जातम्? अनेनैवाशयेन वक्ष्यति— "यतः— उक्त्यन्तरेणाशक्यं यत्[10]" इति। [11]अवरुन्धिज्जइ आलिङ्ग्यते। पुनरुक्तमित्यनुपादेयता लक्ष्यते, उक्तार्थस्यासंभवात्। "कुपिताः प्रसन्ना अवरुदितवदना विहसन्त्यः। यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः॥" अत्र

यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनमिति न्यायसूत्रम्। **ध्वननं**— व्यञ्जनम्, लक्षणं लक्षणाव्यापारः। एकं तत्त्वं-एकमेव वस्तु। एवं ताद्रूप्यपक्षं विघटय्य, लक्षणपक्षं निराकर्तुमाह— **द्वितीयमिति। नन्विति।** लक्षणायां यदा ध्वननमवश्यंभावि लक्षणायाः प्रयोजनाविनाभावित्वात् तदा कथं ध्वनिव्यतिरिक्तो लक्षणाया विषयः स्यादित्याशंका। **गुणमात्रमिति।** बन्धगुण एव भवति, न ध्वनिरित्यर्थः।

**तथा व्यवहारः।** उपचारव्यवहारः। अथ प्रसिद्धिशब्दस्य परम्परया तथैव प्रयोग इति योऽर्थ उक्तः, तत्रारुच्या स्वाभिमतमर्थं प्रदर्शयन्नाह— **वयं त्विति। प्रसिद्धिः।** प्रकर्षेण सिद्धिः प्राकट्यं प्रयोजनस्येत्यर्थः। उत्तानेन प्रकटनेन। **निगूढतां** नितरां गूढतां। **ध्वनौ** प्रयोजनं निगूढतामपेक्षत इत्यर्थः। ननु प्रयोजनस्याचारुत्वात्तत्र ध्वनित्वं न स्यात् निगूढत्वादिति शङ्कायामाह—**वदतीति।** तस्मात् प्रयोजनस्यानिगूढत्वमेव ध्वन्यभावकारणं नाचारुत्वमित्यर्थः।

उक्तेऽर्थे ग्रन्थकारानुमतिं दर्शयति। **अनेनैवेति॥** प्रयोजनस्य चारुतायाः उक्त्यन्तराशक्यत्वं निगूढताविनाभूतम्। **परिम्लानमिति। सङ्गात्**— मर्दनात्। उभयतः द्वयोर्भागयोः। तनोः कृशस्य। अन्तः मध्ये। परिमिलनं विमर्दनं। हरितं हरितवर्णमेव। अम्लानमित्यर्थः॥ **व्यस्तन्यासं** व्याकुलीकृत्य संनिवेशम्। **बिसिनी** नलिनी। अत्र शयनस्याचेतनत्वाद्वदनस्य मुख्यार्थस्यानुपपत्त्या बाधे ज्ञापकत्वं लक्ष्यते। प्रयोजनं च **स्फुटीकरणप्रतिपत्तिः।** तस्याः पुनरनिगूढतया नादरास्पदत्वान्न ध्वननं विशिष्टम्। **चुम्बिज्जइ** इति।

अत्र पुनरुक्तशब्दस्य मुख्यार्थो न घटते। **उक्तार्थस्यासंभवात्।** अतोऽनुपादेयता लक्ष्यते। प्रयोजनाधिक्यरूपं नादरास्पदम्। **कुविआ इति।** अत्र **गृहीत**शब्दस्य मुख्यार्थ उपात्तरूपो नोपपद्यते। अतो

[1]क.ख.ग.(नि)(का) लक्षणा, ङ. लक्षणाम्. [2]क.ख.(नि) तत्रैतदिति. [3]क.ख.ग.(नि)(का) न कृत्यं किञ्चिदिति. [4](कौ) प्रनोजन०. [5]क.ख.(नि) निगूढतेत्यर्थः. [6]क.(का)(के) उपचारे हि. [7]ग. यद्यरूढम्. [8]क.ख.ग. वर्णनेन. [9]ङ. ज्ञातम्. [10]क.ख.ग. 'किम्' अधिकम्. [11]घ.ङ.च.(के) 'परिम्लानम्' इति श्लोकः, 'चुम्बिज्जइ' इति गाथा च समग्रा पठ्यते.

ग्रहणेनोपादेयता लक्ष्यते। हरणेन तत्परतन्त्रतापत्तिः।। **तथा** [1]**अज्जेति।। कनिष्ठभार्यायाः** स्तनपृष्ठे नवलतया कान्तेनोचितक्रीडायोगेन मृदुकोऽपि प्रहारो दत्तः सपत्नीनां सौभाग्य-सूचक[2]तत्क्रीडासंविभागमप्राप्तानां हृदये दुःसहो जातः मृदुकत्वादेव। अन्यस्य दत्तो मृदुः प्रहारोऽन्यस्य च संपद्यते दुःसहश्च मृदुरपीति चित्रम्। दानेनात्र तत्फलवत्त्वं लक्ष्यते।।

[3]**परार्थ इति।।** यद्यपि प्रस्तुतमहापुरुषापेक्षया अनुभवतिशब्दो मुख्य एव, तथाप्यप्रस्तुते इक्षौ प्रशस्यमाने पीडाया अनुभवनेनासंभवता पीडावत्त्वं लक्ष्यते। तच्च [4]**पीड्यमानत्वे**

I.15 पर्यवस्यति। नन्वस्त्यत्र [5]प्रयोजनम्। तत्किमिति न ध्वन्यत इत्याशङ्क्याह— **न चैवंविध इति।।** [6]**उक्त्यन्तरेणेति।।** ध्वन्यतिरिक्तेन[7] स्फुटेन शब्दार्थ[8]व्यापारविशेषेणेत्यर्थः। शब्द इति पञ्चस्वर्थेषु योज्यम्। **ध्वन्युक्तेर्विषयीभवेदिति।।** ध्वनिशब्देनोच्यत इत्यर्थः।। **उदाहृत इति।।** वदतीत्यादौ। एवं यत्र प्रयोजनं सदपि नादरास्पदं तत्र को ध्वननव्यापार इत्युक्त्वा यत्र मूलत एव प्रयोजनं नास्ति, भवति चोपचारस्तत्रापि को ध्वननव्यापार इत्याह— **किं**

I.16 **चेति।।** लावण्याद्या ये शब्दाः स्वविषयात् लवणरसयुक्तत्वादेः स्वार्थादन्यत्र हृद्यत्वादौ रूढाः, रूढत्वादेव च त्रितयसंनिध्यपेक्षणव्यवधानशून्याः, यदाह— ''निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्'' इति, ते तस्मिन् स्वविषयादन्यत्र प्रयुक्ता अपि न ध्वनेः पदं भवन्ति। न तत्र ध्वनिव्यवहारः। उपचरिता शब्दस्य वृत्तिर्गौणी लाक्षणिकी[9] चेत्यर्थः। आदिग्रहणादानुलोम्यं प्रातिकूल्यं सब्रह्मचारीत्येवमादयः शब्दा लाक्षणिका गृह्यन्ते। लोम्नामनुगतमनुलोमं मर्दनम्; कूलस्य प्रतिपक्षतया स्थितं स्रोतः प्रतिकूलम्; तुल्यगुरुः सब्रह्मचारी— इति मुख्यो विषयः। अन्यः पुनरुपचरित एव। न चात्र प्रयोजनं किंचिदुद्दिश्य

लक्ष्यते। आदेयत्वं प्रयोजनम् पुनः स्वाधीनत्वं न बहुमानपदम्। **हरणशब्दस्यापि** मुख्यार्थः तेन स्वीकारात्मा न घटते। तेन **तत्परतन्त्रतापत्तिर्लक्ष्यते।** प्रयोजनं तु स्वाधीनत्वं न श्लाघ्यम्। **अज्जाए** इति। मृदुकत्वं प्रेमातिरेकसूचकमिति सपत्नीनां प्रहारसंपत्तिः । अत्र 'दिण्णो' शब्दस्य मुख्यार्थः पूजानुग्रहकामनाविशिष्टस्वत्वपरित्यागरूपो न संभवति। ततो लक्ष्यते। तत्फलवत्त्वं कनिष्ठ-भार्यायाश्चरितार्थत्वम्। प्रयोजनं पुनः प्रहारस्य सुखोपभोग्यत्वं नात्यादरस्थानम्। **परार्थ इति।** अत्राप्रस्तुतेऽर्थे अनुभवतिशब्दस्य लाक्षणिकत्वं न प्रस्तुतमिति प्रतिपादयति— **यद्यपीति।**

**अनुभवनं** ज्ञानम्। तदचेतनस्येक्षोर्न संभवतीति मुख्यार्थबाधे पीडावत्त्वं लक्ष्यते। पीड्य-मानत्वपर्यवसानं प्रयोजनं कष्टावस्थत्वान्नादरणीयम्। **एवंविध** इति। एतादृशमनादरपदं प्रयोजनमित्यर्थः।। **पञ्चस्वर्थेषु** वाच्यवाचकव्यङ्ग्यव्यञ्जककाव्येषु। शब्दशब्देन हि पञ्चापि कथ्यन्ते। शब्द्यते प्रतिपाद्यते शब्दो अनेनेति च कृत्वा उपचरितशब्दवृत्तिः। शब्दं विवृणोति—**उपचरितेति। अन्यः पुनरिति।**

[1]घ.ङ.च. 'अज्जाए' इति गाथा समग्रा पठ्यते. [2]क.ख.घ. सूचकः. [3]क.ख.ग.(का) 'तथा' अधिकम्, घ.ङ.च. परार्थ इत्यादि मरुभुव इत्यन्तं दृश्यते. [4]क.ख.ग. पीड्यमाने. [5](के) प्रयोजकम्. [6]क.ख.ग.(का) 'यतः' अधिकम्. [7]क.ख.ग. 'उक्त्यन्तरेण' अधिकम्. [8]क.ख.ग. शब्दार्थोभयव्यापार. [9](के) लाक्षणिकरूपे.

लक्षणा प्रवृत्तेति न तद्विषयो [1]ध्वननव्यापारः। ननु "दीवडि तेल्लु णाहि पत्तु द्रम्मि गमिट्टा लावण्णज्जलंगु घरि ढोल्लु पइट्ठा" * इत्यादौ लावण्यादिशब्दसंनिधानेऽस्ति प्रतीयमानाभिव्यक्तिः। सत्यम्; सा तु न लावण्यशब्दात्, अपि तु समग्रवाक्यार्थ-प्रतीत्यनन्तरं ध्वननव्यापारादेव। अत्र हि [2]प्रियतममुखस्यैव समस्ताशाप्रकाशकत्वं ध्वन्यत इत्यलं बहुना। तदाह— **प्रकारान्तरेणेति॥** व्यञ्जकत्वेनैव, न तूपचरित-लावण्यादि[3]शब्दप्रयोगादित्यर्थः। एवं यत्र यत्र भक्तिस्तत्र तत्र ध्वनिरिति तावन्नास्ति। तेन ध्वनेः यदि भक्तिर्लक्षणं तदा भक्तिसंनिधौ सर्वत्र ध्वनिव्यवहारः स्यादित्यति[4]व्याप्तिः। अभ्युगम्यापि ब्रूमः— भवतु यत्र यत्र भक्तिस्तत्र तत्र ध्वनिः; तथापि यद्विषयो लक्षणाव्यापारो न तद्विषयो ध्वननव्यापारः। न च भिन्नविषययोः धर्मधर्मिभावः। धर्म एव च[5] तक्षणमित्युच्यते। तत्र लक्षणा तावदमुख्यार्थविषयो व्यापारः। ध्वननं च प्रयोजन-विषयम्। न च तद्विषयोऽपि द्वितीयो लक्षणाव्यापारो युक्तः, लक्षणा[6]सामग्र्यभावात्

I.17 इत्यभिप्रायेणाह— **अपि चेत्यादि॥** मुख्यां वृत्तिमभिधाव्यापारम्; परित्यज्य परिसमाप्य; गुणवृत्त्या लक्षणारूपया अर्थस्यामुख्यस्य [7]तावत् दर्शनं प्रत्यायना; सा यत्फलं कर्मभूतं प्रयोजन[8]मुद्दिश्य क्रियते तत्र प्रयोजने तावद्द्वितीयो व्यापारः। न चासौ लक्षणैव; यतः स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिरवबोधनशक्तिर्यस्य शब्दस्य तदीयो

**अविरुद्धादिधर्म एव लक्षणमिति।** लक्ष्यवाच्यसाधारणो धर्मो लक्षणमिति लाक्षणिकाः। ननु यदि लक्षणाया अमुख्यार्थ एव विषयः न प्रयोजनम्, तद्द्वितीया काचिल्लक्षणा भवतु। तस्या विषयोऽस्तु प्रयोजनमित्याशंकायामाह—**न चेति। लक्षणासामग्र्यभावादिति।** मुख्यार्थसंभवः, तद्बाधः, मुख्येन लक्ष्यस्य संबन्धः, प्रयोजनं, शब्दस्य स्खलद्गतिश्चेति पञ्चतयी सामग्री। **तत्रेति।** प्रयोजने तावत् द्वितीयो लक्षणाया अनन्तरं कश्चिद्व्यापारोऽस्त्येवेति यावत्। **न चेति।** चस्त्वर्थे। **स्खलन्तीति।** शब्दः खलु स्वार्थे व्याहन्यमानाभिधाशक्तिः सन्नर्थान्तरं लक्षयति, नान्यथा। गङ्गाशब्दो हि स्रोतसि बाधितवृत्तिस्तटे लक्षणामादत्ते। सिंहशब्दश्चतुष्पात्त्वादौ स्खलितगतिः सदृशं प्रतिपादयति। न चैवं तटगतपावनत्वादौ लक्षणीयोऽयं शब्दो बाधितावगमनशक्तिर्भवति। अस्य स्वार्थसमवेतत्वात्। स्वार्थसमवेतो हि धर्मः प्रयोजनत्वेनोच्यते। ननु यदि शब्दः स्वार्थमिव स्वार्थगतं धर्ममप्यभिदध्यात्, तर्हि गोशब्दः शौक्ल्यमभिधत्त

[1]क.ख.घ.च. ध्वननव्यवहारः. [2]क.ख.(के) प्रियतमस्यैव. [3](के) लावण्ययोगा०. [4]ग.घ.च. अतिव्याप्तम्, (का) अतिव्याप्तिः. [5]क.ख.ग. 'च' नास्ति. [6]ङ. सामग्र्याभावात्. [7]क.ख.ग. 'तावत्' नास्ति. [8]क.ख.ग.(का) प्रयोजनरूपं०'.

*दीपके तैलं नास्ति पलं द्रम्मं गवेषितम् ।
लावण्योज्ज्वलाङ्गो गृहे प्रियतमः प्रविष्टः॥ इति छाया।

व्यापारो लक्षणा। न च प्रयोजनम[1]वगम्यतः शब्दस्य बाधकयोगः। तथाभावे तत्रापि निमित्तान्तरस्य प्रयोजनान्तरस्य चान्वेषणेनावस्थानात्[2]। तेनायं [3]लक्षितलक्षणाया न विषय इति भावः। दर्शनमिति ण्यन्तो निर्देशः॥ **कर्तव्य इति**[4]॥ अवगमयितव्य इत्यर्थः॥ **अमुख्यतेति**॥ बाधकेन विधुरीकृततेत्यर्थः॥ **तस्येति**॥ शब्दस्य॥ **दुष्टतैवेति**॥ प्रयोजनाव-गमस्य सुखसम्पत्तये हि स[5] शब्दः प्रयुज्यते तस्मिन्न[6]मुख्येऽर्थे॥ यदि च 'सिंहो वटुः' इति शौर्यातिशयेऽप्यवगमयितव्ये स्खलद्गतित्वं शब्दस्य, तर्हि प्रतीतिं नैव कुर्यादिति किमर्थं तस्य प्रयोगः? उपचारेण करिष्यतीति चेत्, तत्रापि प्रयोजनान्तरमन्वेष्यम्[7];

इति। गामानयेत्येव वक्तव्यं क्वचिन्न गां शुक्लामिति। मैवम्। नात्र धर्मोऽभिधीयते। किं तर्हि, प्रत्याय्यते। तच्चाव्यभिचारेण एव न व्यभिचारिणः। व्यभिचरति गां शौक्ल्यम्। पावनत्वं पुनः न गङ्गां व्यभिचरति, यथाऽग्निमौष्ण्यम्। अतोऽग्निरुष्ण इत्यत्र विशेषणायोगं मन्यन्ते। न चानयोः स्वार्थधर्मयोः पृथक्प्रतिपादनं यथा जातिव्यक्त्योः।अत्र तु व्यक्तौ लक्षणा न युक्ता आक्षेपेणैव सिद्धेः।

ननु तटगतं पावनत्वं अन्यदन्यच्च गङ्गागतं, तदा कथं गङ्गाशब्दस्तटगतं पावनत्वं प्रत्याययेत्। सामान्येन प्रत्याययेदित्यास्थेयम्। किं च वाक्यार्थघटनायैव लक्षणा परिगृह्यते, स तु पावनत्वेन लक्षिते न स्यात्, गंगातटपावनत्वे घोष इति केयं वाचोयुक्तिः? अथ समुच्चयेनाह— **न चेति।**

**प्रयोजनं** पावनत्वादिकं, बाधकयोगः बाधितत्वं, तटगतपावनत्वादिकं लक्षयतश्शब्दस्य न तटे बाधितत्वम्। तथाभावे बाधकयोगे निमित्तान्तरस्य बाधिततटलक्षणीयपावनत्वादिसम्बन्धरूपस्य प्रयोजनान्तरस्यान्यप्रयोजनस्य चान्वेषणेऽनवस्था। **तेनेति।** लक्षितलक्षणायां हि नानवस्था।

आ हन्त किमिदं तन्वि नेत्रयोः श्रावणस्तव।

शरत्कपोले ग्रीष्मोऽङ्गे शिशिरो मुखपङ्कजे॥

अत्र श्रावणेन पूर्वविगवेन वर्षर्तुर्लक्ष्यते इति लक्षितलक्षणा भवति। तत्र च प्रयोजनमुत्कण्ठातिशयप्रतीतिः। न च ततः परं किञ्चिदभिलष्यते इति कुतोऽनवस्था? अतः सिंहो वटुरित्यादिकं ततो अश्रुपातोदयो लक्षितलक्षणाया न विषय इत्यर्थः। अथवा नायं लक्षितलक्षणाया विषयः, लक्षितलक्षणाया एवाभावादित्यर्थः। तथाहि-लक्षणायामवश्यं प्रयोजनेन भवितव्यम्। अत्र प्रथमलक्षणायां किं प्रयोजनं द्वितीयलक्षणार्थ एवेति चेत्? तत्प्रयोजनमपि लक्ष्यमन्यस्या लक्षणाया इत्यनवस्थैव स्यात्। तस्मात् श्रावणादिशब्देन जलवर्षणादिर्लक्ष्यते। प्रयोजनमुत्कण्ठातिशय एवेति। **यदि चेति।** सिंहशब्दो यथा वटोः स्खलद्गतिर्भवति तया शौर्येऽपि चेत् तत्प्रतीतिर्न भवेदिति तत्प्रयोगस्य वैयर्थ्यापात इत्यर्थः।

ननु सिंहशब्दः शौर्ये स्खलद्गतिर्भवति, शौर्यं च प्रतिपादयति लक्षणयेत्याशङ्कते— **उपचारेणेति।** परिहरति— **तत्रेति।** शौर्ये लक्ष्ये प्रयोजनमन्यदन्विष्य ग्राह्यं लक्षणायां प्रयोजनस्यावश्यं-भावात्, पुनस्तस्य च लक्ष्यता स्यात्, प्रयोजनस्य लक्षणीयत्वाङ्गीकरणात्। तदा तस्यापि प्रयोजनं, तस्यापि तथेति मूलक्षतिकृदनवस्थैवापतेदित्यर्थः।

[1]ग. अपगमयत.. [2]क.ख.ग.(नि) अन्वेषणेनावस्थानात्. [3]क.ख.ग.(नि) लक्षणलक्षणाया. [4]क.ख.ग.(नि) कर्तव्य इत्येव. [5]क.ख.घ.ङ.च.'स' नास्ति. [6]ग.(नि) तस्मान्न मुख्यार्थे. [7]ग.घ.ङ.च.(नि) अन्विष्यते.

तत्राप्युपचारेऽनवस्था। अथ न[1] तत्र स्खलद्गतित्वम्, तर्हि प्रयोजनेऽवगमयितव्ये न[2] लक्षणाख्यो व्यापारः तत्सामग्र्यभावात्। न च नास्ति व्यापारः। न चासावभिधा, समयस्य तत्राभावात्।यद्व्यापारान्तरमभिधालक्षणातिरिक्तं स ध्वननव्यापारः॥ **न चैवमिति॥** न च प्रयोगे दुष्टता काचित्। प्रयोजनस्याविघ्नेनैव प्रतीतेः। [3]तेनेयमभिधैव मुख्येऽर्थे बाधकेन [4]विधुरीकृता प्रविवृत्सुः निरुध्यमाना सती अचरितार्थत्वादन्यत्र प्रसरति[5]। अत [6]एवामुख्योऽस्यायमर्थ इति व्यवहारः। तथैव चामुख्यतया संकेतग्रहणमपि तत्रास्तीत्यभिधापुच्छभूतैव लक्षणा ॥**तस्मादिति** उपसंहरति। यतोऽभिधापुच्छभूतैव[7] लक्षणा, ततो हेतोः वाचकत्वम् अभिधाव्यापारम् आश्रिता तद्बाधनेनोत्थानात्तत्पुच्छभूतत्वाच्च गुणवृत्तिः, गौणलाक्षणिकप्रकार इत्यर्थः, सा कथं ध्वनेर्व्यञ्जनात्मनो लक्षणं स्यात्, भिन्नविषयत्वादिति। एतदुपसंहरति— **तस्मादिति॥** यतोऽतिव्याप्तिरुक्ता, तत्प्रसङ्गेन च भिन्नविषयत्वम् तस्माद्धेतोरित्यर्थः । एवम् "अतिव्याप्तेरथाव्याप्तेर्नचासौ लक्ष्यते तया" इति कारिकागतामतिव्याप्तिं व्याख्यायाव्याप्तिं व्याचष्टे— **अव्याप्तिरप्य[8]स्येति॥** अस्य गुणवृत्तिरूपस्येत्यर्थः। यत्र यत्र ध्वनिस्तत्र तत्र यदि भक्तिर्भवेन्न[9] स्यादव्याप्तिः; न चैवम्। अविवक्षितवाच्ये ह्यस्ति भक्तिः "सुवर्णपुष्पाम्" इत्यादौ[10]। "शिखरिणि" इत्यादौ तु सा कथम्? ननु लक्षणा तावद् गौणमपि व्याप्नोति। केवलं शब्दस्तमर्थं लक्षयित्वा तेनैव सह सामानाधिकरण्यं भजते 'सिंहो वटुः' इति॥ अर्थो वार्थान्तरं लक्षयित्वा स्ववाचकेन तद्वाचकं समानाधिकरणं करोति। शब्दार्थौ वा युगपत्तं लक्षयित्वा [11]अन्याभ्यामेव

आशङ्कते— **अथ चेति।** शौर्यं प्रतिपादयत्येव सिंहशब्दः तत्कथमस्यात्राशक्तत्वमित्यर्थः। परिहरति–**तर्हीति।** तर्हि शौर्यं न लक्ष्यत इत्यर्थः। एवं प्रयोजनस्याविघ्नेन प्रतीतिर्यतः, तत इयं लक्षणाप्येवं स्थितिं लभत इत्याह—**तेनेति।** गङ्गाशब्दस्याभिधा प्रथमं स्रोतसि प्रवर्तितुमिच्छति। यदा बाधकेन घोषाधिकरणत्वरूपेण विधुरीक्रियमाणा अचरितार्थत्वात् तटे प्रसरति, तदा लक्षणेत्युच्यते। तत्र संमयोऽप्यस्ति॥ मुख्यार्थबाधादित्रयरूप इत्यर्थः। **अभिधापुच्छभूतैवेति।** तदुक्तम्— गुणवृत्तिरमुख्यत्वेन स्थितं वाचकत्वमेवेति। **'शिखरिणी'त्यादाविति।** विवक्षितान्यपरवाच्य इति शेषः।

अथ विवक्षितान्यपरवाच्येऽपि लक्षणाऽस्त्येवेति समर्थयितुं चोदयति— **नन्विति।** तर्हि कोऽनयोर्भेदव्यवहारहेतुरित्यत्राह— **केवलमिति।** गुणवृत्तौ त्रयः प्रकाराः। शब्दः प्राधान्येन लक्षकः, अर्थस्तु गुणतयेत्येकः प्रकारः। एतद्वैपरीत्येन द्वितीयः। उभयप्राधान्येन तृतीयः। तदनुसरणेनोपन्यस्यति— **शब्द इत्यादि।** सिंहो वटुरित्यत्र सिंहशब्दो **वटुं लक्षयित्वा तेनैव तद्वाचकभूतवटुशब्देन समानाधिकरणो भवतीति** यावत्। **अर्थः** सिंहार्थः, **अर्थान्तरं** वटुं, **स्ववाचकेन** सिंहशब्देन **तद्वाचकं** वटुवाचकं, शब्दार्थौ

[1]घ.च. 'न' नास्ति. [2]क.ख.घ. 'न' नास्ति. [3]क.ख.ङ.च.(नि)(का) तेनाभिधैव, घ. तेनैवमभिधैव. [4]क.ख.च.(नि) 'विधुरीकृता' नास्ति. [5]क.ख.ग.(नि) 'इति' अधिकम्. [6]क.ख.ग.च.(नि) एव मुख्यो. [7]ङ.च.(के) अभिधाशेषभूतैव. [8]क.ख.ग.(नि) 'अपि' नास्ति. [9]क.ख.ग.(नि) 'च' अधिकम्. [10]घ.ङ.च. 'आदौ' नास्ति. [11]क.ख.ग.ङ.(नि) ताभ्यामेव.

शब्दार्थाभ्यां मिश्रीभवतः इत्येवं लाक्षणिकाद्गौणस्य भेदः, यदाह– 'गौणे शब्दप्रयोगः, न लक्षणायाम्' इति। तत्रापि तु[1] लक्षणास्त्येवेति सैव सर्वत्र व्यापिका। सा च पञ्चविधा, तद्यथा–अभिधेयेन संयोगात्। 'द्विरेफ'शब्दस्य हि योऽभिधेयो भ्रमरशब्दः, द्वौ रेफौ यस्येति कृत्वा, तेन भ्रमरशब्देन यस्य संयोगः संबन्धः षट्पदलक्षणार्थस्य सोऽर्थो द्विरेफशब्देन लक्ष्यते अभिधेयसंयोगं व्याख्यातरूपं निमित्तीकृत्य। सामीप्यात्। "गङ्गायां घोषः"। समवायतः[2] इति। [3]संबन्धादित्यर्थः। 'यष्टीः प्रवेशय' इति यथा। वैपरीत्यात्। यथा–शत्रुमुद्दिश्य कश्चिद्ब्रवीति–'किमिवोपकृतं न तेन मे[4] इति। क्रियायोगादिति। [5]कार्यकारणयोगादित्यर्थः। यथा– अन्नापहारिणि व्यवहारः 'प्राणानयं हरति' इति। एवमनया लक्षणया पञ्चविधया विश्वमेव व्याप्तम्। तथा हि–"शिखरिणि" इत्यत्राकस्मिकप्रश्नविशेषादिबाधकानुप्रवेशे सादृश्याल्लक्षणास्त्येव। नन्वत्राङ्गीकृतैव मध्ये लक्षणा, कथं तदयुक्तं विवक्षितान्यपरेति। [6]तद्भेदोऽत्र मुख्योऽसंलक्ष्यक्रमात्मा विवक्षितः। तद्भेदशब्देन च रसभावतदाभासतत्प्रशमभेदास्तदवान्तरभेदाश्च। न च तेषु लक्षणाया उपपत्तिः। तथा हि– विभावानुभावप्रतिपादके काव्ये [7]मुख्येऽर्थे तावद्बाधानु-

सिंह इत्यात्मकौ तं वट्वर्थम्। **गौणे इति। शब्दप्रयोगः** –लक्ष्यशब्दप्रयोगः। 'सिंहो वटु'रित्यत्र हि लक्ष्यवाचको वटुशब्दः प्रयुज्यते' 'गङ्गायां घोष' इत्यत्र लक्ष्यवाचकस्तटशब्दो न प्रयुज्यत इत्येतावदेव वैलक्षण्यमनयोः। मुख्यार्थबाधादिकमुभयत्रापि सममित्यर्थः। अत एवाह– **तत्रापीति।** लक्षणापञ्चविधत्वम**भिधेयेन संयोगादित्यादि** श्लोकानुवृत्त्या प्रदर्शयति– **तद्यथेति। विश्वमेवेति।** उक्तहेतुपञ्चकेऽन्यतमस्य कुत्रचिदप्यपरिहार्यत्वादिति भावः। तदेव प्रस्तुते योजयति–**तथाहीति। सादृश्यादिति।** ननु लक्षणायाः सादृश्यं न निमित्तत्वेनोक्तम्, तत्कथं सादृश्याल्लक्षणास्तु? मैवम्, समवायग्रहणात्–संबन्धसामान्यवचनात्, संबन्धविशेषः सादृश्यात्मकः सेत्स्यति। **विवक्षितान्यपरेति।** लक्षणायां मुख्यार्थो न विवक्षितो भवतीति भावः।

अत्र समाधिमाह– **तद्भेद** इति। विवक्षितान्यपरशब्देनासंलक्ष्यक्रमात्मा भेदो विवक्षितः, न संलक्ष्यक्रम इति यावत्। तदवान्तरभेदाः हास्यवीरादयः। अत्रापि किं लक्षणा न स्यादित्यत आह–

[1]क.ख.ग.(नि)(का) 'तु' नास्ति. [2]क.ख.ग.घ.च.(नि)(का)(के) समवायादिति. [3]क.ख.(नि) स्वसंबन्धात्. [4]क.ख.ग.(नि)(का) मम. [5]क.ख.ग.घ.ङ.(नि)(के) कारणभावादित्यर्थः. [6]क.ख.(के) न तद्भेदो हि मुख्यो. [7]क.ख.ग.(नि)(के) काव्ये तत्रार्थे मुख्ये तावत् बाधकानु०.

प्रवेशोऽप्यसंभाव्य इति को लक्षणावकाशः। ननु किं बाधया? इयदेव लक्षणायाः स्वरूपम्– 'अभिधेयाविनाभूतप्रतीतिर्लक्षणेष्यते[1]' इति। इह चाभिधेयानां विभावानुभावादीनामविनाभूता रसादय इति लक्ष्यन्ते, विभावानुभावयोः कारणकार्यरूपत्वात्[2], व्यभिचारिणां च तत्सहकारित्वादिति चेत्, मैवम्। धूमशब्दाद्धूमे प्रतिपन्ने ह्यग्निस्मृतिरपि लक्षणाकृतैव स्यात्। ततोऽग्नेः शीतापनोदस्मृतिः इत्याद्यपर्यवसितः शब्दार्थः स्यात्। धूमशब्दस्य स्वार्थविश्रान्तत्वान्न तावति व्यापार इति चेत्, आयातं तर्हि मुख्यार्थबाधो लक्षणाया जीवितमिति। सति हि[3] तस्मिन् स्वार्थविश्रान्त्यभावात्। न च विभावादिप्रतिपादने बाधकं किंचिदस्ति। नन्वेवं धूमाव[4]गमानन्तराग्निस्मरणवद्विभावादिप्रतिपत्त्यनन्तरं रत्यादिचित्तवृत्तिप्रतिपत्तिरिति शब्दव्यापार एवात्र नास्ति। इदं तावदयं प्रतीतिस्वरूपज्ञो मीमांसकः प्रष्टव्यः– किमत्र परचित्तवृत्तिमात्रे प्रतिपत्तिरेव रसप्रतिपत्तिरभिमता भवतः? न[5] चैवं भ्रमितव्यम् । एवं हि लोकगतचित्तवृत्त्यनुमानमात्रमिति का रसता। यस्त्वलौकिकचमत्कारात्मा रसास्वादः काव्यगतविभावादिचर्वणाप्राणः, नासौ स्मरणानुमानादिसाम्येन खिलीकारपात्रीकर्तव्यः। किं तु लौकिकेन कार्यकारणानुमानादिना संस्कृतहृदयो विभावादिकं प्रतिपद्यमान एव न ताटस्थ्येन प्रतिपद्यते; अपि तु हृदयसंवादापरपर्यायसहृदयत्वपरवशीकृततया पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मरणादिसरणिमनारुह्यैव तन्मयीभवनोचितचर्वणाप्राणतया। न चासौ चर्वणा प्रमाणान्तरतो जाता पूर्वम् येनेदानीं स्मृतिः स्यात् । न चाधुना कुतश्चित्प्रमाणान्तरादुत्पन्ना, अलौकिके प्रत्यक्षाद्यव्यापारात् । अत एवालौकिक एव विभावादिव्यवहारः। "यदाह[6] विभावो विज्ञानार्थः"। लोके तु कारणमेवाभिधीयते न विभावः। अनुभावोऽप्यलौकिक एव। यदाह– "यदयमनुभावयति वागङ्गसत्त्वकृतोऽभिनयस्तस्मादनुभावः" इति। तच्चित्तवृत्ति-

**बाधानुप्रवेशोऽपीति।** कुत एव संबन्धप्रयोजने इति भावः। **सति तस्मिन्निति।** मुख्यार्थबाधे कथं धूमशब्दः स्वार्थे विश्राम्येदिति यावत्।

समुच्चयेनाह– **न चेति। न ताटस्थ्येनेति।** न साधारण्येन अस्वगतत्वेनेत्यर्थः। **अलौकिकेति।** कथं रसस्यालौकिकत्वमित्यत आह– **अत एवेति॥** लोके कारणं कार्यं सहकारि इति व्यवहारस्तदेवालौकिकत्वं संवादपुरस्सरं प्रसाधयति–**यदाहेति।** 'विभावो विज्ञानार्थ' इति। विभाव्यन्ते विशिष्टतया ज्ञायन्ते स्थायिव्यभिचारिणः सवागङ्गसत्त्वा अनेनेति भावः। अभिनयानां ह्यनेकहेतुजत्वम्, तद्यथा– 'हर्षार्त्तिभयहासधर्मधूमरोगादिभ्यो बाष्पः'। तद्बाष्पात् किं प्रतीयताम्? विभावात्तु झटित्येव निश्चयः। **यदयमिति।** अनुभावयति बोधयति वागङ्गसत्वकृताभिनयरूपस्थायिसञ्चारिणः इत्यनुभावः।

[1]क.ख.ग.(नि)(का) लक्षणोच्यते. [2]घ.ङ.च. कार्यभूतत्वात्. [3]घ.ङ.च. 'हि' नास्ति. [4]क.ख.ग.(नि)(का) गमनानन्तर. [5]क.ख.ग.(नि) नैवम्. [6]क.ख.ग.(नि) 'यदाह ....अलौकिक एव' नास्ति.

तन्मयीभवनमेव ह्यनुभवनम्। लोके तु कार्यमेवोच्यते नानुभावः। अत एव परकीया न चित्तवृत्तिर्गम्यत इत्यभिप्रायेण "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति सूत्रे[1] स्थायिग्रहणं न कृतम्। कृतं[2] तत्प्रत्युत शल्यभूतं स्यात्। स्थायिनस्तु रसीभाव औचित्यादुच्यते । तद्विभावानुभावोचित चित्तवृत्तिसंस्कारसुन्दरचर्वणोदयात् । हृदयसंवादोपयोगिलोकचित्त[3]वृत्तिपरिज्ञानावस्थायामुद्यानपुलकादिभिः स्थायिभूतरत्याद्यवगमाच्च। व्यभिचारी तु चित्तवृत्त्यात्मत्वेऽपि मुख्यचित्तपरवश एव चर्व्यत इति विभावानुभावमध्ये गणितः। अत एव रस्यमानताया एषैव निष्पत्तिः यत् प्रबन्धप्रवृत्तबन्धुसमागमादिकारणोदितहर्षादिलौकिकचित्तवृत्ति[4]न्यग्भावनेन चर्वणारूढत्वम्। अतः चर्वणात्राभिव्यञ्जनमेव, न तु ज्ञापनम्, प्रमाणव्यापारवत्। नाप्युत्पादनम् हेतु

ननु यद्येवमनुभावो भावस्य गमक एव स्यादित्यत्राह–'चितवृत्तितन्मयीभवनमेव ह्यनुभवन'-मिति। न परगतचेतवृत्तिबोधकमात्रमिति व्यावर्त्यम्। एतदेव प्रमाणेन दृढयति– **अत एवेति।** विभावसूत्रे हि "विभावानुभावव्यभिचारिस्थायिसंयोगाद्रसनिष्पत्ति"रिति स्थायिग्रहणं कर्तव्यम्। विभावादिभिः स्थायिनः संयोगाद्रसनिष्पत्तिरित्यर्थसिद्धये। अन्यथा, कस्य विभावादिसंयोग इत्यप्रतीतिः स्यात्। तत्तु न कृतम्, अनुभावग्रहणेनैव स्थायिसिद्धेः। अनुभावाविनाभूतमनुभवनम्, तच्च चित्तवृत्तितन्मयी भवनम्। चित्तवृत्तिश्च स्थायीति॥ सा पुनः स्वगतैव न परगता। स्वात्मविमुखरसनिष्पत्तिकथनानुपपत्तेः। अतो युक्तमुक्तं '**परकीया न चित्तवृत्तिर्गम्यत**' इति। अतो यदि त्वत्र स्थायिग्रहणं क्रियते, तर्हि तद्व्यर्थं विरुद्धं च स्यादित्याह– **कृतं तदिति।**

ननु अन्योन्यसंयुक्तेषु विभावादिषु, कुतो विशिष्य स्थायी रस इत्युच्यते। किं विभावो रसो न स्यात्, अनुभावो वा व्यभिचारी वा? अत्राह– **स्थायिनस्त्विति।** औचित्यमेव स्पष्टयति– **तद्विभावेति।** तस्या विभावानुभावोचितायाश्चित्तवृत्तेर्यः संस्कारो वासनात्मकतया स्थितिः तेन। सुन्दर्याश्चर्वणाया उदयात्। हेत्वन्तरमप्याह– **हृदयसंवादेति।** लोकवृत्तपरिज्ञाने खलु हृदयसंवादो भवति। लोके चोद्यानादिविभावैः पुलकादिभिरनुभावैश्च स्थायिभूतरत्याद्यवगमः इत्यर्थः॥ नैतावता स्थायिनोऽनुमितिरनुमता लोकन्यायप्रदर्शनात्। नाट्ये तु चर्व्यत एव। स्थायिनाट्यायमानश्च काव्यम्।

ननु चित्तवृत्तित्वाविशेषात् स्थायीव व्यभिचार्यपि न ग्रहणमर्हति इत्यत्राह– **व्यभिचारी त्विति।** मुख्यचित्तवृत्तिः स्थायी व्यभिचारिणो मुख्यचित्तवृत्तिपारवश्यं दृढयति– **अत एवेति।**

**रस्यमानता** लौकिकहर्षादिचित्तवृत्तिन्यग्भावनेन चर्वणारूढत्वमिति यावत्। पराङ्गाच्चर्वणास्वरूपमाह–**अतश्चेति।** व्यावर्त्यं दर्शयति– **न तु ज्ञापनमिति।** समुच्चयेन रसस्यालौकिकत्वं स्फुटयति–

[1]घ.ङ.च. इत्यत्र. [2]क.ख.ग.ङ.च.(नि)(का)(के) 'कृतं' नास्ति. [3]क.ख.(के) 'चित्त' नास्ति. [4]क.ख.ग.ङ.च.(नि)(का) न्यग्भावेन चर्वणारूपत्वम्.

व्यापारवत्। ननु यदि नेयं ज्ञप्तिः, न वा निष्पत्तिः, तर्हि किमेतत्। नन्वयमसावलौ**किको रसः**। ननु विभावादयोऽत्र किं ज्ञापको हेतुः उत कारकः? न ज्ञापको न कारकः, अपितु चर्वणोपयोगी। ननु क्वैतत् दृष्टमन्यत्र? यत एव न दृष्टम्, तत एवालौकिकमित्युक्तम्। [1]ननु एवं रसोऽप्रमाणं स्यात्? अस्तु, किं ततः? तच्चर्वणात एव प्रीतिव्युत्पत्तिसिद्धेः किमन्यदर्थनीयम्? नन्वप्रमाणकमेतत्? न, स्वसंवेदनसिद्धत्वात्, ज्ञानविशेषस्यैव चर्वणात्मत्वात् इत्यलं बहुना। अतश्च रसोऽयमलौकिकः, येन ललितपरुषा[2]द्यनुप्रासस्यार्थाभिधानानुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वम्। का[3] तत्र लक्षणायाः शङ्कापि? काव्यात्मकशब्दनिष्पीडनेनैव च[4] तच्चर्वणा दृश्यते। दृश्यते हि तदेव काव्यं पुनः पुनः पठंश्चर्व्यमाणश्च सहृदयलोकः। न तु काव्यस्य तत्र "उपादायापि ये हेयाः" इति न्यायेन कृत[5]प्रतीतिकस्यानुपयोग एवेति शब्दस्यापि[6] ध्वननव्यापारः! अत एवालक्ष्यक्रमता। यत्तु वाक्यभेदः स्यादिति केनचिदुक्तम् तदनभिज्ञतया। शास्त्रं हि [7]सकृदुच्चरितं समयबलेनार्थं

**अतश्चेति।** न खलु लोके किञ्चिदनुप्रासव्यङ्ग्यं वस्तु दृष्टम् । अतोऽनुप्रासव्यङ्ग्यस्यालौकिकत्वं सिद्धमिति भावः। एवं लक्षणारूपलक्षणस्य व्याप्तिप्रदर्शनार्थं प्रवृत्तौ प्रसंगागतानुमानपराकरणाय रसस्यालौकिकत्वं प्रसाध्याऽनुप्रासेन व्यज्यमाने रसध्वनौ लक्षणायाः शङ्कैव नास्तीत्याह– **का तत्रेति।** लक्षणादिकृवैमुख्येनानुप्रासो रसव्यञ्जक इत्यत्र युक्तिं दर्शयति– **काव्यात्मकेति।** निष्पीडनमाम्रेडनं, **तच्चर्वणा** रसचर्वणा। **दृश्यते हीति।** ननु काव्येन रसचर्वणा साध्या। सा सकृत्पठितेनैव सिद्धा। ततः पुनः-पुनस्तस्य पठनं किमर्थम्? न खलु कृतप्रतीतिकस्य पौनःपुन्येनोपादानम्। दीपो दृश्यदर्शने नोपादीयते इत्याशंक्याह– **न त्विति।** कृतप्रतीतिकस्य **काव्यस्यानुपयोग एवेति।** नेत्यन्वयः। "उपादायापि ते हेयाः।" इति न्यायस्त्वत्र काव्यमार्गे न क्रमते। पुनः पुनः पाठेनैव रसचर्वणादर्शनादित्यर्थः। अत एव शब्दस्यापीह ध्वननव्यापारपरिग्रह इत्याह– **शब्दस्यापीति।** शब्दस्य व्यापारे सति क्रमाप्रतिभासोऽपि युक्त इत्याह– **अत एवेति।**

ननु इह वाच्यव्यङ्ग्यभेदेनार्थद्वयं प्रतिभासते। तत्प्रतिपादनं कर्तुं कथं सकृत्प्रयुक्तमेकं वाक्यं शक्नुयात्? तस्माद्वाक्यभेदः कर्तव्यः। तत्रैकं वाक्यं वाच्यं प्रतिपादयेत्। अन्यत् व्यङ्ग्यमिति कस्यचिन्मतमावृत्य दूषयति– **यत्त्विति।** यदत्रार्थद्वयं प्रतिपाद्यते तत् परस्परविरुद्धं वा अविरुद्धं वा इति विकल्पावष्टंभेन प्रथमकल्पं निराकरोति– **शास्त्रं हीति।** शास्त्रं वाक्यमिति यावत्– द्वितीयपक्षे

[1](के) 'पानकरसोऽपि क्वान्यत्र दृष्टो गुडमरीचादावदर्शनादिति सर्वत्र सुवचम्' अधिकम्. [2]क.ख.ग.(नि) 'आदि' नास्ति. [3](के) 'का' स्थाने 'न' इति पाठः. [4]क.ख.ग.(नि)(का) 'च' नास्ति. [5](के) प्रीतिकस्य. [6](के) इह. [7]क.ख.ग.(नि)(का) -सकृदुच्चारितम्.

प्रतिपादयद्युगपद्विरुद्धानेकसमयस्मृत्ययोगात्कथमर्थद्वयं प्रत्याययेत्। अविरुद्धत्वे वा तावानेको वाक्यार्थः स्यात्। क्रमेणापि विरम्यव्यापारायोगः। पुनरुच्चरितेऽपि वाक्ये स एव [1]समयादिप्रकरणादेस्तादवस्थ्यात्। प्रकरणसमयप्राप्त्यार्थतिरस्कारेणार्थान्तर-प्रत्यायकत्वे[2] नियमाभाव इति। तेन 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति श्रुतौ खादेत्[3] श्वमांसमित्येष नार्थ इत्यत्र का प्रमेति प्रसज्यते। तत्रापि न [4]काचिन्नियततेत्यनाश्वास इत्येवं वाक्यभेदो दूषणम्। इह तु विभावाद्येव प्रतिपाद्यमानं चर्वणाविषयतोन्मुखमिति समयाद्युपयोगाभावः। न च 'नियुक्तोऽहमत्र करवाणि कृतार्थोऽहम्' इति [5]शास्त्रीयप्रतीति-सदृशभेदः। तत्रोत्तरकर्तव्यौन्मुख्येन लौकिकत्वात्। इह तु विभावादिचर्वणाद्भुतपुष्प-वत्तत्कालसारैवोदिता न तु[6] पूर्वापरकालानुबन्धिनीति लौकिकादास्वादाद्योगिविषयाद्वान्य[7] एवायं रसास्वादः। अत एव 'शिखरिणि' इत्यादावपि मुख्यार्थबाधादिकमनपेक्ष्यैव सहृदया वक्त्रभिप्रायं चाटु[8]प्रीत्यात्मकं संवेदयन्ते[9]। [10]अत एव ग्रन्थकारः सामान्येन

आह—**अविरुद्धत्व इति।** वाक्यार्थस्यैकत्वे वाक्यमप्यैकमेवेति कुतो वाक्यभेदप्रसङ्गः इति भावः। किं च अर्थद्वयप्रतिपादनं युगपद्वा क्रमेण वेति विकल्पाभिसन्धिना युगपत्पक्षो वाक्यार्थस्यैकत्वापादकः इति क्रमपक्षं दूषयति—**क्रमेणापीति।** अपि चास्तु वाक्यभेदः। प्रसङ्ग इति भावः। तत्र पुनः पठिते वाक्ये समयप्रकरणादिः स एव वा अन्यो वेति विकल्पाभिप्रायेण। प्रथमकल्पे वाक्यभेदो निरर्थक इत्याह—**पुनरुच्चरितेऽपीति।** द्वितीयकल्पं दूषयति **प्रकरणसमयेत्यादिना प्रसज्यत** इत्यन्तेन। नाम्नां धातूनां चानेकार्थत्वात् प्रकरणादीनामप्यनियमात् अग्निहोत्रं जुहुयादित्यस्य श्वमांसं खादेदित्यर्थः किं न स्यादिति कश्चिन्नास्तिकः। एवमर्थान्तरप्रत्यायनेऽपि न काचिद्व्यवस्थेति दर्शयति—**तत्रापीति।**

ननु वाच्यस्तावत् समयप्रकरणादिना प्रतीयतां व्यङ्ग्यप्रतीतौ किं तत्समयादिकमित्यत्राह—**इह त्विति।** समयाद्यनपेक्षणप्रसङ्गात् काव्यप्रतीतिः शास्त्रप्रतीतिविलक्षणेत्याह— **न चेति।** विधिवाक्यश्रवणे नियुक्तोऽहमिति बुद्धिः तदर्थानुष्ठाने कृतार्थोऽहमिति। शास्त्रप्रतीतेर्लौकिकत्वानुवादेन साधयति—**तत्रेति।** तत्र शास्त्रप्रतीतौ। उत्तरकाले यत् कर्तव्यं तत्रौन्मुख्यमेव शास्त्रश्रवणेन तु तावन्मात्रेणान्वयनिरपेक्षतया आनन्दैकघनता। अतो लौकिकत्वमेव शास्त्रप्रतीतेरित्यर्थः।

काव्यप्रतीतिस्वरूपमाह— **इह त्वित्यादिना रसास्वाद इत्यन्तेन। अद्भुतपुष्पं** इन्द्रजालादिदर्शितपुष्पम्। अत्र तत्कालसारत्वमात्रेण पुष्पमुपमानीकृतं न तु भ्रान्तत्वेनापि, रसास्वादस्य निरपेक्षत्वेनाभ्रान्तत्वात्। लौकिकास्वादादन्य इत्युक्ते योगिज्ञानेऽतिप्रसङ्गः। तद्व्यावृत्त्यर्थं **योगिविषयाद्वेति।**

**अत इति।** यतो रसास्वादस्य पूर्वापरकालानुबन्धवन्ध्यत्वमलौकिकत्वं च तत इत्यर्थः॥ **शिखरिणीत्यादावपीति।** अपिशब्देन लक्षणाप्रकारसङ्करं **संवेदयन्ते** संविदन्ते विदन्तीत्यर्थः। व्याचक्षत इति वा। अत्रोपपत्तिं प्रदर्शयति— **अत एवेति।** सामान्येन साधारण्येन **भक्तेरभावं** लक्षणाया अभावम्। स

[1]घ.ङ.च. समगादिः प्रक०. [2]क.ख.ग.(नि) 'हि' अधिकम्. [3](कौ) खादेच्च न (देत् श्व) **मांसमित्येष.** [4]**क.ख.ग.(नि)(का)** काचिदियत्तेत्यना. [5]क.ख.ग.(नि)(का) शास्त्रप्र०. [6]सर्वमातृकासु तुशब्दरहित **एव** पाठः. [7]**क.ख.ग.(नि)(का)** विषयाच्चान्य. [8]क.ख.ग.(नि) प्रतीत्या०. [9](के) संवेदयति. [10]क.ख.ङ.च.छ. तत.

विवक्षितान्यपरवाच्ये ध्वनौ भक्तेरभावमभ्यधात्। अस्माभिस्तु दुर्दुरूटं[1] प्रत्याययितुमुक्तम्:- भवत्वत्र लक्षणा, अलक्ष्यक्रमे तु कुपितोऽपि किं करिष्यसीति। यदि तु न कुप्यते 'सुवर्णपुष्पाम्' इत्यादावविवक्षितवाच्येऽपि मुख्यार्थबाधादि[2]लक्षणासामग्रीमनपेक्ष्यैव
I.18 व्यङ्ग्यार्थविश्रान्तिरित्यलं बहुना। उपसंहरति— **तस्माद्भक्तिरिति॥**

ननु मा भूद्भक्तिरिति[3] ध्वनिरिति चैकं रूपम्। मा च भूद्भक्तिर्ध्वनेर्लक्षणम्। उपलक्षणं तु भविष्यति। यत्र ध्वनिर्भवति तत्र भक्तिरप्यस्तीति भक्त्युपलक्षितो ध्वनिः। न तावदेतत्सर्वत्रास्ति। इयत्ता च किं परस्य सिद्धम्, किं वा नः[4] त्रुटितम्[5]। तदाह—
I.19 **कस्यचिदिति**[6]॥ ननु अत्र[7] भक्तिस्तावच्चिरन्तनैरुक्ता। तदुपलक्षणामुखेन च ध्वनिमपि समग्रभेदं लक्षयिष्यन्ति ज्ञास्यन्ति[8] च। किं तल्लक्षणेनेत्याशङ्क्याह—**यदि चेति॥** अभिधानाभिधेयभावो ह्यलंकाराणां व्यापकः। ततश्चाभिधावृत्ते वैयाकरणमीमांसकैर्निरूपिते कुत्रेदानीमलंकारकाराणां[9] व्यापारः। [10]तथा हेतुबलात्कार्यं जायत इति तार्किकैरुक्ते किमिदानीमीश्वरप्रभृतीनां कर्तॄणां ज्ञातॄणां वा कृत्यमपूर्वं स्यादिति सर्वो निरालम्बः[11] स्यात्॥ तदाह— **लक्षणकरण**[12]**वैयर्थ्यप्रसङ्ग इति॥** मा भूद्वाऽपूर्वोन्मीलनम्; पूर्वोन्मीलितमेवास्माभिः सम्यङ्निरूपितम्, तथापि को दोष इत्यभिप्रायेणाह— **किं च**[13]

चाविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः सामान्येनेत्यत्र विवक्षितान्यपरवाच्यशब्देन लक्षणाभाव उक्तः। लक्षणासद्भावे वाच्यस्याविवक्षितत्वप्रसङ्गात्।

ननु यद्येवं किमिति भवता शिखरिणीत्यत्र यदि वा आकस्मिकाविशिष्टप्रश्नानुपपत्तेः मुख्यबाधायां सादृश्याल्लक्षणा भवतु मध्ये, इत्यादि वर्णितमित्याशंक्याह— **अस्माभिस्त्विति। दुर्दुरूटं** दुर्ग्राहकग्रन्थग्रस्तमङ्गीकृत्य ब्रूते— **भवत्विति**। अत्र लक्ष्यक्रमे। **अलक्ष्येति।** रसादिध्वनौ लक्षणाप्रसङ्ग एव नास्ति। तत्र कथं तव लक्षणाग्रह इत्यर्थः।

अपि चाभिमतविषयेऽपि लक्षणाया न प्रभविष्णुतेत्याह—**यदि त्विति।** एवं भक्तिलक्षणस्याव्याप्तिं प्रसाध्य, तद्विषयं वाग्विस्तरोद्यमं निवर्तयति— **अलं बहुनेति।** प्रकृतमनुसन्धत्ते— **उपसंहरतीति।**

अथोपलक्षणपक्षं निरूपयितुमुपक्रमते— **ननु मा भूदिति।** भक्त्युपलक्षितो ध्वनिरित्येतावती उपलक्षणपक्षाशङ्का। **न तावदित्यादि** परिहारः। **एतत्**—उपलक्षणं **सिद्धं**—लब्धम्॥
**त्रुटितं**-छिन्नं। **चिरन्तनैः**—पुरातनैः। **अभिधावृत्तौ**— अभिधाव्यापारे। न त्वनाख्येयत्वपक्षो यः पञ्चमः स

[1]क.ख.ग.(नि)(के) द्रुन्द्वरूढम्. [2]घ.ङ.च.छ. लक्षणां. [3]क.ख.(के) भक्तिर्ध्वनिरिति, घ. 'ध्वनिरिति' नास्ति. [4]क.ख.ग.(नि) नु. [5]क.ख.ग.(नि) 'इति' अधिकम्. [6]क.ख.ग.(नि)(का) कस्यचिदित्यादि. [7]क.ख.ग.घ.(नि)(का) 'अत्र' नास्ति. [8]क.ख.(नि) 'ज्ञास्यन्ति' नास्ति. [9](के) 'काराणां' नास्ति, तत्स्थाने 'कारकाराणां' इत्येव साधु. [10]क.ख.ग.(नि) यथा. [11](का)(के) निरारम्भः. [12]क.ख.घ.ङ.च.(नि) करणे. [13]क.ख.ग.(का) किञ्चेति.

**लक्षणेऽन्यैरिति॥** **प्रागेवेति॥** अस्मत्प्रयत्नादिति शेषः। एवं त्रिप्रकारमभाववादम्, [1]भाक्तमन्तर्भूतत्वं च निराकुर्वताऽलक्षणीयत्वमेतन्मध्ये निराकृतमेव। अत एव मूलकारिका [2]साक्षात्तन्निराकरणार्था न श्रूयते। वृत्तिकृत्तु निराकृतमपि प्रमेय[3]शय्यापरिपूरणाय स्व[4]कण्ठेन तत्पक्षमनूद्य निराकरोति— **केऽपीत्यादिना॥** उक्तया नीत्या 'यत्रार्थः शब्दो वा—' इति सामान्यलक्षणं प्रतिपादितम्। वक्ष्यमाणया तु नीत्या विशेषलक्षणं भविष्यति 'अर्थान्तरे संक्रमितम्' इत्यादिना। तत्र प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम्। [5]द्वितीयोद्द्योते तु कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्। तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्द्योते मूलविभागमवोचत् 'स च द्विविधः' इति ॥ **सर्वेषामेवे[6]ति॥** लौकिकाणां शास्त्रीयाणां चेत्यर्थः॥ **अतिशयोक्त्येति॥** यथा 'तान्यक्षराणि हृदये किमपि ध्वनन्ति'* इति। अतिशयोक्त्या अनाख्येयतोक्त्या,

किमिति न निराकृत इत्यत आह— **एवं त्रिप्रकारमिति** अभाववादिपक्षपराकरणे प्रतिपदमेवंभूतमिदमेवं-भूतमिदमिति ध्वनेर्लक्षणीयत्वप्रकाशनात्। अलक्षणीयत्वपराकरणमाम्रवणसेकपितृतर्पणवत् अपृथग्यत्न-सिद्धमित्यर्थः। तत्रोपपत्तिं दर्शयति—**एतदिति।** **वृत्तिकृत्त्विति।** **प्रमेयशय्या—** प्रमेयोद्देशः। प्रथमं त्रिप्रकारोऽभाववादः, पुनर्भक्तिवादः, पश्चादनाख्येयत्वपक्ष इति पञ्चप्रमेयवस्तूनि पूर्वपक्षत्वात् पराकरणीयत्वेन निर्देशितानि। तत्र चत्वारि प्रतिक्षिप्य पञ्चमाप्रतिक्षेपे खण्डनीयप्रमेयापरिपूरणं स्यादिति कृत्वा वृत्तिकृदनाख्येयत्वपक्षं निराकरोतीत्यर्थः। कुत्र कथं ध्वनेः सामान्यलक्षणमुक्तं कुत्र वा विशेषलक्षणमिति आशङ्क्याह— **यत्रार्थ इति।** **अवान्तरविभागमिति।** अर्थान्तरसंक्रमितवाच्यमत्यन्त-तिरस्कृतवाच्यं चेत्यवान्तरविभागः। अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति मूलविभागः। **अत्रैवोद्द्योते—** प्रथमोद्द्योते। नन्विदमनाख्येयत्वं नासत्त्वात्, नाप्यसाधुत्वात्, किं तु आतिशयित्वादिति चेद्युक्तमित्याह वृत्तिकारः। **यदि पुनरिति।** **काव्यान्तरं** गुणीभूतव्यङ्ग्यं चित्रं च। अत्रातिशयोक्त्येति पदं व्याचष्टे— **अतिशयोक्त्येति।** **अनाख्येयत्वोक्त्या इति।** अतिशयस्य व्याख्यानं अनाख्येयताया उक्तिः

[1]क.ख.ग.(नि)(का) भक्त्यन्तर्भूततां. [2]घ. 'साक्षात्' नास्ति. [3]क.ख.(नि) संख्यापूरणाय. [4]क.ख.(नि)(का) 'स्व' नास्ति. [5]घ.ङ.च.(के) द्वितीये तूद्द्योते. [6]क.ख.ग.(नि)(का) 'एव' नास्ति.

* निद्रार्धमीलितदृशो मदमन्थराणि नाप्यर्थवन्ति न च नाम निरर्थकानि।
अद्यापि मे मृगदृशो मधुराणि तस्या–स्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥

(इति पूर्णश्लोकः बिल्हणस्येति शाङ्गर्धरपद्धतौ लभ्यते। श्लोकसंख्या—३४६८; परन्तु कलशकस्येति सुभाषितावलिः—श्लोकसंख्या—१२८०).

साररूपतां प्रतिपादयितुं [1]दर्शितम्। इति शिवम्॥

**किं लोचनं विनालोको भाति चन्द्रिकयैव[2] हि।**
**तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात्॥**
**यदुन्मीलन[3]शक्त्यैव विश्वमुन्मीलितं[4] क्षणात्।**
**स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम्॥**

**॥इति श्रीमहामाहेश्वराभिनवगुप्तोन्मीलिते सहृदयालोकलोचने ध्वनिसङ्केते प्रथमोद्द्योतः॥**

अनाख्येयतोक्तिः **साररूपतां प्रतिपादयितुमिति** प्रवृत्तयेति शेषः।

अतिशयोक्त्या अनाख्येयतोक्त्या साररूपतां प्रतिपादयितुं प्रवृत्तयानया **काव्यान्तरातिशयितं** रूपं यत् व्याख्यायत इत्यर्थः।

**युक्ताभिधायिन इति।** ध्वनेः साररूपत्वाभिधानं अस्माकमभिमतं, यतो वयं काव्यस्यात्मा ध्वनिरिति ब्रूम इति भावः।

**किं लोचनमिति।** लोचनं नेत्रम् अयं व्याख्यानग्रन्थश्च। लोको भवनमालोकश्चायं ध्वनिग्रन्थः। **चन्द्रिका**—ज्योत्स्ना ध्वनिव्याख्यानग्रन्थश्चान्यः। **लोचनोन्मीलनं**— उन्मीलितं लोचनमिति यावत्। आलोकस्य शोभाग्रहणं वा। उन्मीलितेन लोचनेन नान्येनेत्यर्थः। **यदुन्मीलनेति।** उन्मीलनशक्त्या स्पन्दशक्त्या। **उन्मीलति**—स्फुरति। **स्वात्मायतनविश्रान्तां** स्वस्वरूपावस्थिताम्।

॥ इति प्रथमोद्द्योतः॥

[1]क.ख.ग.(नि)(का) दर्शितमिति. [2]क.ख.ग.(नि)(का) चन्द्रिकयापि हि. [3]क. युक्त्यैव. [4](का) लति.

**Triumphant is the uniqueness** of the Goddess of Speech, designated by the twin names, Poet and Critic. Even without a shred of causality, it brings forth subjects never known before; by the exuberance of its own *rasa* (experience of ecstasy), it vivifies the entire universe, hard as flint; it illumines everything in a double process of intuition and verbal objectification.

Serving attendence on the lotus-feet of the Great Teacher Bhaṭṭa Indurāja, I have acquired the philosophy of beauty; I am known by the title Abhinavagupta (lit. 'ever more protected'). I shall herein expound the work Kāvyāloka as far as possible, following the text closely, so that the people are proffered my own vision (also my own commentary) designated *Locana* or Insight.

Svecchā....

Although the author of the gloss, in himself, is blessed by the grace acquired through unimpeded salutations to the Godhead, he once again invokes His grace through an apt benedictory verse in order that the commentators and readers (lit. listeners) might obtain the full fruit of their labours, viz., commenting and reading, as desired by them.

May the nails of Nara-siṁha, the destroyer of the demon Madhu, protect you, i.e., the commentators and readers; for they alone deserve to be addressed to. The second personal pronoun expresses essentially a vocative. Protection is no other than offering assistance in the attainment of the desired goal. That becomes possible only by removing the obstacles pitted against it. Such is the protection intended here. The Godhead is indeed ever-active as well as endowed with a steadfastness of purpose without even a trace of illusion. As this heroism is understood, the heroic sentiment is suggested here. The nails do duty as weapons; through weapons, protection is effected. As the nails serve as exclusive or extraordinary instruments, they are put in the active voice to emphasize their superior powers. It is also suggested that the Godhead stands in no need of other instruments. The allusion to Him as the destroyer of Madhu indicates that He is always busy removing the fears of the world. One might ask what His qualifications are. The answer is that He is a lion by choice, and not born so as a result of past action, nor become so by another's form suited to His purpose most, viz., killing the particular demon. Now what about the nails? They are capable of

cutting down the woes of devotees. It is quite reasonable that nails should have a cutting capacity. Though woe itself (being abstract) cannot be actually cut by nails, His nails can be reasonably imagined to have that capacity, since they have been created by His choice to accomplish His object. Such is the main import. Another alternate explanation is this: Hiraṇyakaśipu, a thorn to all the three worlds, is the cause of misery in the entire universe. Therefore he is himself the exclusive embodiment of woe—as he torments people who are singularly devoted to the Lord. Hence were he to be destroyed, all woe would be automatically destroyed. Thus the Lord shows His infinite mercy even in such a contingency. The nails are further qualified by epithets. They possess purity or stainlessness. Words like 'pure', 'soft', etc., primarily refer to abstract states only. Besides that, by their brightness too, that is to say, by their form characterised by both archness and attractiveness, they outshine the moon and cause him worry. That the crescent moon is intended here is suggested by the *dhvani* based on the power of sense. The Expression 'causing him worry' suggests that in the presence of the nails, the moon becomes pale (by comparison) and unattractive. That the nails can cause worry or injury is well known. More so would be the said capacity in the case of the nails of 'Nara-siṁha' because they are extraordinary. Furthermore, seeing their purity and archness, the crescent moon suffers worry within himself.

'Although the qualities of purity and archness are common to both of us, only these (nails) are able to remove the woes of the devoted, but not I'. This idea constitutes a suggested figure of speech, viz., *Vyatireka* or contrast. 'Furthermore, so long I alone happened to be the object of regard and appreciation by the people, on account of my exclusive possession of purity and delightful shape; now they will start looking up to these extraordinary ten nails only, appearing like so many crescent moons with the added ability of destroying the sorrows of the devoted, and will not look up to me any longer'. So thinking, the crescent moon suffers, as it were, incessant worry. This is the suggested mixed figure, viz. *Utprekṣā-apahnuti* (poetic fancy and poetic denial). Such is the three-fold *dhvani* of idea (*vastu*), figure of speech (*alaṅkāra*) and sentiment (*rasa*), as explained by my worthy preceptor.

I.1 Kavyasyatma...

In order to state primarily the nature of the subject on hand, and secondarily, conveying, by implication, the virtual benefit of its direct benefit, along with the relation between the subject and the benefit, and

the overall benefit of such exposition, the author comes out with this first statement. When the author of the gloss explains the word learned by the phrase 'those who know the truth about poetry', his idea is that the word 'learned' here has in view the knowledge of the soul of poetry, since it is connected with the expression 'the soul of poetry' occurring earlier.

The word 'soul' (*ātman*) is explained by the word 'truth' (*tattva*); this indicates not only that it is essential but also distinct from other verbal usages. The word *iti* refers to the sound-form *dhvani* only, because its meaning, being a matter of controversy, cannot be properly taken as anything certain.

Now this is explained further:

**Saṁjñitaḥ**

As a matter of fact, it is not just a designation, but it has also justification for being regarded as the meaning of the term *dhvani,* in so far as it is the very quintessence of everything. Otherwise, the learned would not have propagated such a concept. To bring out this idea it is said:

**tasya sahṛdaya....**

An even better interpretation would be:- the word *iti* coming in a dislocated order has a reference to the entire sentence as such, viz., "the meaning called *dhvani,* has been advocated as the soul of poetry". If it were to refer only to the designation, where would be its coherence with the statement: 'the meaning called *dhvani*'? Virtually, "the word *dhvani* is the soul of poetry" would be its sense, as in the sentence: "this man says "cow"!" Nor is it possible that the very matter of controversy is non-existent. A controversy about qualities can arise only when a qulificand is existent. We need not elaborate on this irrelevant point and tire the patience of men of taste. Possibly, a single learned man might say a wrong thing inadvertently; but such a mistake cannot arise in the case of many learned men. That is the reason why the plural has been used, viz., *budhaiḥ.* This is further explained:

**Paramparayā...**

The purport is that the learned have said this in an unbroken tradition of teacher and pupil, even though it has not been recorded in particular books. Many learned men would not have taught so respectfully a disrespectable theory. Hence the author says:

**Samyagāmnātapūrvaḥ....**

The author goes on to indicate by the expression *'-pūrva'* that it is not enunciated for the first time ~~here, that is why he~~ further interprets it as: *Saṁyak=āsamantāt, mnātaḥ =prakaṭitaḥ.*

**tasya.....**

How can there by any possibility of the non-existence of the very subject for whose acquisition one should attempt? But what can we do? Such is the colossal ignorance of the critics who deny ***dhvani.*** Of course, we have not personally heard the various arguments of the critics who deny *dhvani.* They are only imagined and refuted by us; hence the use of the perfect tense which relates to what is not directly perceived. A future subject cannot be refuted, for the simple reason that it is not born. One might say: "We will imagine that also in our mind and refute it"; such a mental construction itself will contradict its futurity. Thus, only the past tense is left; it is both mediate and without any specific relevance to the present. Therefore, the verb is put in the perfect tense, viz.,

**jagaduḥ**

With this idea in view, the author interprets the original text as laying bare only hypothetical objections. Even framing an impossible hypothesis is improper, since it is proper to suppose what is only possible. Otherwise the assumed hypotheses as well as objections would become endless. Therefore, in order to justify the hypothetical objections to be presently set out, he states as a preamble the verb—*Sambhavanti.*

Were he to say: 'hypothetical positions will be assumed' (i.e. with the verb *ācakṣīran* in the future tense), it would only be a repetition. There is no future assuming involved in what is actally present in the mind at the time of writing. The present tense of the verb is indicative of this. One might argue: 'a hypothesis which is itself based on another hypothesis involving an impossible entity cannot possibly admit of any refutation'. So it is said:—

**vikalpāḥ**

There is positively no such (impossible) entity at the back of this hypothesis. What we have are only imaginary ideas. Being void of the proper understanding of it (=poetry), such ideas are indeed likely to arise; that is why the verbs here like *ācakṣīran* are put in the optative mood, referring to imagined hypotheses, thereby suggesting that they relate to actual ideas in the past, as in the following example:

If what within the body stays,
Were to be turned outside;
Men would carry sticks always
To drive the dogs and crows aside.

Here, 'supposing the body were to be seen like this (i.e. inside out), it would be also noticed in the said manner (i.e. men carrying sticks)'; the

